


# प्रवर्धतां भारतराष्ट्र-भाग्यम्



(१)

महर्षयो यत्र विचारदक्षाः
लोकोपकाराय सदानुरक्ताः ।
देवास्सदागत्य वसन्ति यत्र
प्रवर्धतां भारतराष्ट्र-भाग्यम् ॥

(२)

स्वार्थैकलक्ष्याः कपटाः खला ये
विद्रोहिणो भारत-जन्मभूमेः ।
निपात्य दुष्टान् दनुजान् कुशीलान्
प्रवर्धतां भारतराष्ट्र-भाग्यम् ॥

(३)

असु[illegible] मत्वा
[illegible]त्र ।
[illegible]स्मदीया
[illegible]ष्ट्र-भाग्यम् ॥

[illegible]

परस्प[illegible]
क्षतिं च ये राष्ट्रधनस्य कृत्वा ।
दुष्टांश्च धिक् तान् दमनेन तेषां
प्रवर्धतां भारतराष्ट्र-भाग्यम् ॥

(५)

प्रवृद्धमैत्र्या च जना यथा स्युः
राष्ट्रे समस्ते सकला समानाः ।
प्रवर्ततां राष्ट्रहिताय चिन्तनम्
प्रवर्धतां भारतराष्ट्र-भाग्यम् ॥

(६)

मर्मच्छिदं चातिघृणं करालं
परस्परं दुष्टविकारभावम् ।
विधूय शीघ्रं जनमानसेषु
प्रवर्धतां भारत-राष्ट्र-भाग्यम् ॥

(७)

तन्त्रे च मन्त्रे च भृशं प्रवीणाः
शास्त्रेषु सर्वेषु यथा च दक्षाः ।
अत्रोद्भवाः ज्ञानरताः यथा स्युः
प्रवर्धतां भारत-राष्ट्र-भाग्यम् ॥

(८)

पूर्णा च पृथ्वी सुजनाः प्रसन्नाः
दारिद्र्यरोगादिविवर्जिताश्च ।
अज्ञानशून्या भुवि सन्तु सर्वे
प्रवर्धतां भारतराष्ट्र-भाग्यम् ॥

—डॉ० उमारमणझा, डी० लिट्० दर्शनविभागाध्यक्षः
श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठम्, शास्त्रीनगरम्, जम्मूतवी-180004 (J & K.)

दूरभाष : २६५ (हरिद्वारम्) **भारतोदयः** तारगृहम् महाविद्यालयः (ज्वालापुरम्)

वर्षम्—७५ अङ्क—३

★

सम्पादकः
**डॉ० हरिगोपालशास्त्री**
एम्० ए०, व्याकरणाचार्यः

★

सह-सम्पादकः
**केशवप्रसाद उपाध्यायः**
एम्० ए०, आयुर्वेदाचार्यः

★

प्रकाशकः
**…-सभा**
… ज्वालापुरम्
…रनपुरम्

# विषयानुक्रमणिका

१. प्रवर्धतां भारतराष्ट्रभाग्यम् —डॉ० उमारमणझा १
२. मासावतरणिका —डॉ० नारायणमुनिश्चतुर्वेदः ३
३. श्रुतिसुधा ,, ,, ,, ४
४. शान्तोऽपि नवमो रसः —डॉ० रामप्रतापतिवारी ५
५. पञ्चमहायज्ञविमर्शः —श्री कैलाशनाथद्विवेदी ७
६. सः तस्यां रमते (कथा) —डॉ० रूपनारायणपाण्डेयः ११
७. गुणपुराणम् —डॉ० दे०खं० खरंडीकरः १४
८. कविता-कलापः —श्री हर्षदेवमाधवः १५
   (i) अन्धकारे सरकसदर्शनम्
   (ii) हिमवर्षाः
   (iii) तव श्वासः
९. अमरनाथसंस्कृतसाहित्ययात्रा (यात्रावृत्तम्) —श्री कृष्णनारायणपाण्डेयः १६
१०. श… -जलिः सादरम् —श्री केशवप्रसाद उपाध्यायः १८
११. …ल-माहात्म्यम् —श्री प्रा०स०शं० जोशी १८
१२. …क्तयः —डॉ० सत्यव्रतशर्मा अजेयः १९
१३. तथ्यकथ्यम् ........ २०
   (i) प्रा० रामचन्द्रनरसिंह-अरट्ठीकट्टी—महोदयानामभिनन्दनम् ........ २०
   (ii) संस्कृतभाषाप्रचारिसभायां संस्कृतसमारोहः ........ २०
   (iii) आर्यसमाजस्य वार्षिकोत्सवः ........ २०
   …) नारायणभवने शोकसभा ........ २०
   …मतयः ........ २१
   …पमाचाराः ........ २२
   … रामराज्यम् ........ २२
…——डॉ० प्रशस्यमित्रः शास्त्री २३
… —नरदेव झा २४

# भारतोदयः

भविक-भरित-भारतोदयोऽयं भवविभोद्भवभावनाभिलाषी ।
भगवति भुवि भक्ति-भाव-भाजां भव-भय-भाव-भरं भ्रियान्न नु मन् ।।१।।

निशम्यतां लेख-ललाम-सञ्चय-प्रकाशने येन कृतोऽतिनिश्चयः ।
गृहीतसद्धर्मविशेषसंश्रयश्चकास्ति सोऽयं भुवि "भारतोदयः" ।।२।।

वर्षम्:-७५ ] सितम्बर १९८५ ई०, आश्विन २०४२ विक्रमाब्दः [ अङ्कः ३

## मासावतरणिका [१]

( १ )

वर्षान्तेष्वपि वर्षयाश्रितमहो दृश्यं निजस्यैव यत् ।
दर्शं दर्शमिदं निदर्शनमथ स्वस्थं व्यवस्थापितम् ।
यत्तेजः सलिलेन शाम्यति सदा पित्तप्रकोपस्तदा ।
कस्मातसम्भवभूमिमेतु महतां मन्ये मनश्शान्तये ।।

( २ )

किं वा कौतुककीर्तिकायकलितं कालं विलोकामहे,
येषु प्रेषितसूर्यरश्मिनिवहाः स्वोष्णव्रतव्रातहाः ।
हन्त ! स्वान्तनितान्ततान्ततततयस्तापाय शान्तं वपुः,
पित्तानां कुपितां दशां समुदितां दृष्ट्वैव तुष्टाः स्वयम् ।।

१- मासावतरणिकायाः श्रुतिसुधायाश्च लेखकः डॉ० नारायणमुनिश्चतुर्वेदः गुरुकुलज्वालापुरस्थः ।

# श्रुति-सुधा

**ओ३म् अग्ने मृड महाँ अस्यय आ देवयुं जनम् । इयेथ बर्हिरासदम् ।।**

—साम, आ०का०, ख० ३, मन्त्र ३

## पदार्थः :-

**हे अग्ने !** =ज्ञानस्वरूपसर्वज्ञ! त्वं, **महान् अयः असि**=सर्वजगतोऽपि गतिगौरवं गृह्णासि । तस्मात्, **देवयुवम्** = त्वादृशं देवं द्रष्टुमुद्यतम्, **जनम्**=माम्, **मृड**=मुदितं विधेहि । **आसदं बर्हिः आ इयेथ**=समुपवेशनश्रेयः साधकमासनं मानसमासाद्य सर्वतो भावेन समुपविश ।

## अभ्यर्थना :-

हे अग्ने! धनञ्जय ! मदीयहृदयधामधरणीं निजाधारधृतां न दग्धां दधासि । सा तु साधकसाधनासिद्धिसाधनायिता शुद्धबुद्धस्य तेऽधिष्ठानाधिष्ठिता, सर्वदैव परिशुद्धा । मन्ये विविधजन्मोद्धारविधातुरपि तेऽगाधधर्मेतरसंस्कारमहोदधिनिमग्नस्य मे धवलेतरा बुद्धिर्न दधाति सर्वत्र निबद्धस्यापि सर्वोद्धारसमर्थस्यापि सूक्ष्मधीगम्यस्यानुग्रहं गुरोर्भवतः ।

हे धैर्यधरणीधर! ममापि धृतिस्त्वदीयमध्यावकाशधित्सया नान्यत्किमपि विधातुमनुसन्दधाति । अधिषवणस्थितसोमसुधापायिनो जनस्य सुधानिधिरपि यथा नादधाति समवधानं व्यवधानमन्तरापि । तथैव सोमस्तुतिरूपस्वधाधयनपरस्य साधकस्य ममापि न जगदाधारं त्वां मुधा विधानाय धीः ।

हे सर्वानन्दमन्दिर ! दीनेभ्योऽदीनेभ्यो दरिद्रेभ्योऽदरिद्रेभ्यो दुःखोदधिनिमग्नेभ्योऽदुःखाद्रिसमारूढेभ्यो देवेभ्योऽदेवेभ्यश्च सर्वेभ्यो दयापात्रेभ्यो **निजदयानेन कदा न समुद्यतोऽसि ।** भवदादरमाददाना वेदविद्योदधिं दूरमनुप्रविष्टा विद्वांसस्त्वदीयामेव विद्योतमानां दीप्तिमादाय मेदिनीतो यावद्युलोकं विद्योतन्ते । वेदनावेदितहृदया निवेदनाद्यतदार्शनिकदृष्टयश्च सर्वदैव सद्यस्त्वां द्रष्टुमुद्यता एव ।

हे विपद्मर्दन! सम्पद्विपदप्रद्रुता अपि त्वदीयदर्शनामृतपानदत्तहृदः सुहृदानन्दप्रदं त्वामेव प्रसादयन्ति । निरवद्यविद्याविद्योतितदोषज्ञास्तु दोषज्ञं दोषदूरीकरणनिपुणञ्च देवाधिदेवं समाददाति सदनाय मनसस्त्वामित्यत्र सन्देह एव न । सद्यः समुदितान् दिव्यगुणप्रमुदितान् दिवौकसो दिव्यदृष्ट्या प्रसाद्य प्रसादं कदा न प्रदर्शयसि ।

त्वं महान् अयः, असि । उत्तरायणं दक्षिणायनन्तु त्वदीयप्रदक्षिणां कुर्वाणे नाद्यापि विरमतः । अक्षीणकिरणस्य प्रतिक्षणसमीक्षणपरस्य क्षमतापि न त्वदीयलक्ष्यमक्षिकुक्षीकर्तुं सक्षमा । विलक्षणस्य ते लक्षणन्तु विचक्षणोऽपि **"अग्राह्यमलक्षणमचिन्त्यमपदेश्यमित्याद्युपनिषद्दिशा"** क्षामक्षामः स्वशक्तिकक्षामेव विजहाति ! त्वं कुत्र नासि । क्षणदीप्तिरपि तवालक्षितपादप्रक्षेपं न क्षिणोति । उत्क्षेपणापक्षेपणादिपञ्चकर्माण्यपि ते प्रगतिकारणं न निर्णयाभिमुखं नयन्ति ।

अत एतादृशं देवं द्रष्टुमुपगतस्य कृतसर्वस्वसमर्पणस्योपेक्षा तु लक्षणीयैव नेति निजमहिम्ना मृड, पीडितस्य पीडाञ्च निगडय । ❋

---

**व्यर्थः पुत्रो नैव वैयर्थ्यहेतुः**
**तातस्याऽपख्यातिमप्यादधाति ।**
**इक्षोरग्रे मञ्जरी जायते चेत्**
**कृत्स्नामिक्षोर्माधुरीं सञ्छिनत्ति ।।**

बेकार का लडका केवल बेकारी का ही कारण नहीं होता, प्रत्युत पिता के अपवाद (निन्दा या अपकीर्ति) को भी ला देता है। दृष्टान्त में यद ईख में मञ्जरी उत्पन्न हो जाती है, तो वह केवल बेकार ही नहीं, ईख के स्वाद-मिठास का भी विनाश कर डालती है

# शान्तोऽपि नवमो रसः

—डॉ० रामप्रतापतिवारी संस्कृत-विभागाध्यक्षः
गढ़वालविश्वविद्यालयः श्रीनगरम् (गढ़वालः)

दुःखस्यासार एवं संसारः। यत्र सुख-दुःखे संसरतस्तदेव संसारः। जगत् शब्दोऽपि सार्थक एव यतः यत्र न कश्चित् स्थाय्यपितु सर्वोऽपि गच्छति तज्जगत्। परिवर्तनशीलत्वात् सर्वे गच्छन्त्येव। अत्र निवसन्तः सर्वेऽपि प्राणिनः क्षणिकसुखानन्तरं दुःखमेवानुभवन्ति। अस्मिन् नश्वरसंसारे न किमपि वस्तु चिरस्थायिन्। अतः सुखानन्तरं दुःखं दुःखानन्तरं सुःखं च जायते। चक्रवत्परिवर्तन्ते सुखानि च दुखानि च। योगिनस्त्वस्मात् सांसारिकदुःखात् स्थायिनीं मुक्तिमभिलषन्तस्तपोयोगाभ्यां ज्ञानं प्राप्नुवन्ति। जगतः यथार्थस्वरूपमवलोक्य दुःखमयस्वरूपमवगम्य जगति वीतरागाः जायन्ते, आत्मस्वरूपञ्च विज्ञायानन्दमनुभवन्ति।

सांसारिकजीवनं यापयन्तो जनाः सरसकाव्यानधीत्य नाटकादींश्च प्रेक्ष्यानन्दमग्नाः जायन्ते। रसास्वादस्तु ब्रह्मास्वादवद् विद्यते। ब्रह्मानुभूतौ केवलं ब्रह्माण एव ज्ञानं जायते, परन्तु रसानुभूतौ विभावादीनामप्यनुभूतिर्भवति[1]।

कोऽयं रसः? कुत्र चासौ विद्यते? विभावैरनुभावैः सात्विकभावैः व्यभिचारिभिर्भावैर्यदा रत्यादयः स्थायीभावः स्वाद्याः भवन्ति, तदा ते एव रत्यादिस्थायीभावाः 'रसाः' भवन्ति[2]। नाट्यशास्त्रस्य प्रणेता भरतः **"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति."** इति स्वीकरोति[3]।

**रसाः कुत्र निवसन्ति?** भट्टलोल्लटः, रसस्यावस्थितिः नायके भवति दर्शकाः चमत्कारैरानन्दमनुभवन्तीयति स्वीकरोति।

रामादिविभावानां शिक्षाऽभ्यासकौशलेन नटः तादृशमभिनयति यत्ते विभावादयो नटस्यैव प्रतीयन्ते। चित्रतुरगन्यायेन नटे रसाः अनुमीयन्ते, अनुमानकर्त्तारः दर्शकाश्चानन्दमनुभवन्ति। एवमनुकार्ये नटे रसोऽस्ति, सामाजिकाश्च रसस्यानुमानं कुर्वन्ति।

भट्टनायकः रसस्य स्थितिं दर्शकेषु स्वीकरोति। अभिनवगुप्तस्य मतानुसारेण स्थायीभावः प्रेक्षकस्य मनसि वासनारूपेण विद्यते, अभिनेतोरभिनयेन स्थायीभावोऽभिव्यज्यते। धनञ्जयः, रसस्यावस्थितिं नटप्रेक्षकोभयोः स्वीकरोति[4]। साहित्यदर्पणकारविश्वनाथमतानुसारेण नटे न रसस्यावस्थितिरपितु सामाजिका एव रसास्वादं कुर्वन्ति[5]।

एवं कतिपयस्थाने एव नटे रसानुभूतिर्मन्यते, परन्तु सामाजिकानां रसानुभूतिर्न कुत्रापि वार्यते। अतः सामाजिकैरनुभूयमानाः एव रसा इति निश्चितम्। अभिनवगुप्तस्य मतानुसारेण **"सर्वेऽपि सुखप्रधान रसाः"** सन्ति[6]। साहित्यदर्पणकारोऽपि सर्वे रसाः सुखप्रदायकाः इति स्वीकरोति[7]।

1—"वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः"। साहित्य दर्पणम् ३/२
2—विभावैरनुभावैः सात्त्विकैर्व्यभिचारिभिः। आनीयमानः स्वाद्यत्वं स्थायीभावो रसः स्मृतः॥ —दशरूपकम् ४/१
3—भरतस्य नाट्यशास्त्रम् अध्यायः ६, पृ० २२२॥
4—"काव्यार्थभावनास्वादो नर्तकस्य न वार्यते"॥ —दशरूकम्
5—"राघवादेः स्वरूपतां दर्शयन्नर्तको नैव रसास्वादनं भवेत्"। —साहित्यदर्पणम् ३/१९
6—अभिनवभारती पृ० २७६
7—"सुखं सज्जायते तेभ्यः सर्वेश्योऽपीति"। —साहित्यदर्पणम्

भयानककरुणशान्ताश्च रसा सुखात्मका एव, एतद्विषये सहृदयानां चित्तमेव प्रमाणम्। करुणरसप्रधाने 'उत्तररामचरिते' शान्तरसप्रधाने 'प्रबोधचन्द्रोदये' नाटके चानन्दानुभूतिर्न चेत् तदा न कोऽपि मूढः तत्प्रेक्षणे प्रवर्तते। परन्तु सर्वेऽपि तत्प्रेक्षणे प्रवर्तन्ते। अतः सर्वेऽपि रसाः सुखात्मका एव सन्ति। शान्ते भयानके रसे विनोदो नैव जायते। शान्तरसस्तु सत्तामात्रेण तिष्ठत्यित्यपि निरस्तम्।

ननु शृङ्गारादयः अष्टरसाः सन्ति। अष्टविधमनोवृत्तिभिस्तेषामनुभवो जायते। नाट्यकर्मणि सामाजिकास्ताभिर्मनोवृत्तिभिर्रसान् पृथक्-पृथक् अनुभवन्ति। परन्तु कुत्रापि नवात्मिका मनोवृत्तिरस्ति। अतो नाट्ये शान्तो रसोऽस्त्येव[8]।

**कोऽयं शान्तो रसः?** यथास्थाननिवेशितैर्विभावादिभिर्वर्धितः 'शमः' स्थायीभावो शान्तो रसेति स्वीकृतः[9]। **के च शान्तस्य विभावाः?** धर्मप्रवर्तकानि पुराणानि, पुण्याश्रमे निवासः, योगिजनसंगतिः, दारिद्र्यभयनरकादीनां यातनानां श्रवणम्, क्लेशः, दुःखत्रयस्य फलोच्छेद एवास्य विभावोऽस्ति[10]।

**के च शान्तस्यानुभावः?** अत्र तु मानापमानयोः शोकहर्षयोः समवृत्तितयाऽनुभावाः न स्वीक्रियन्ते[11]। धनञ्जयमतानुसारेण शान्तो रसोऽनिर्वचनीयः[12]। एवं शान्तस्य सत्ता त्वस्त्येव[13] यतः भरतः शान्तरसमष्टरसव्यतिरिक्तिं स्वीकृतवान्। अभिनवगुप्तोऽपि शान्तरसं स्वीकरोति।

शान्तरसस्य सत्ता महाकाव्यादिषु विद्यत एव परन्तु नाट्ये विद्यते न वेति विचार्यते।

नाटकादीनामनुशीलनं प्रेक्षणं च मनसः खिन्नतामपनेतुमेव क्रियते। मानसिकपरिश्रमानुभूतिमपनेतुमेव नाटककाव्यादीनामनुशीलनं क्रियते।

मानसिककष्टापनयन द्विविधमेव-एकं तु मानसिकशान्तिर्मात्रम्, द्वितीयं मानसिकशान्त्यानन्तरमानन्दानुभूतिः।

**नाट्ये कतिविधो रसः?** धनञ्जयः शान्तस्यानभिनेयत्वान्नाट्ये न शान्तरस इति स्वीकृतवान्। भावप्रकाशनकारोऽपि अनभिनेयत्वादेव नाट्येऽष्टरसानेव स्वीकरोति।

विविधनाट्यानामनुशीलनेनैतज्ज्ञायते यन्नाट्येऽपि शान्तो रसः दृश्यते। यथा शृङ्गाररसप्रधानेऽप्यभिज्ञानशाकुन्तले आश्रमवर्णनं शान्तरसस्य प्रतीकम्। नागानन्दप्रबोधचन्द्रोदयादीनि शान्तरसप्रमुखानि नाटकानि दर्शनीयानि। रत्नावल्यामपि सिद्धपुरुषस्य वर्णनं कृतम्। मृच्छकटिकेऽपि बौद्धभिक्षुणा पुनर्जीविता वसन्तसेना इति वर्णितम्। एवं सर्वेष्वपि नाटकेषु रसानुभूतिं सामाजिकाः कुर्वन्ति न तु नटः। अतोऽभिनय–शून्येऽपि शान्ते सामाजिकाः शान्तिमनुभवन्त्येव। शमभावोऽपि सुखमेव। आत्मविश्रामजं सुखमेव शान्तो रसः। भावप्रकाशने प्रशान्तं नाम नाटकभेदं स्वीकृतम्। यस्मिन् नाटके शान्तरसप्राधान्यं तत्प्रशान्तं नाम नाटकम्। नाट्यदर्शनेऽपि खिन्नमनसा शान्तिरेव जायते। न्यायवैशेषिकदार्शनिकाः सुखदुःखव्यतिरिक्तं शमानुभूतिमेव मुक्तिस्वरूपं स्वीकुर्वन्ति। शान्तरससंवलितनाट्यदर्शनेन दुःखनिवृत्तिः सुखनिर्वृत्तिश्च जायते। अतः नाट्येऽपि नवमो रसः विद्यते।

अतो मम्मटेन **'शान्तोऽपि नवमो रसः'** इति स्वीकृतवान्। ❀

---

8— "ततश्शान्तो रसो नाट्येऽप्यस्तीति प्रतिजानते"। —भावप्रकाशनम् पृ० ६६।
9—भावप्रकाशनम् पृ० ६६।
10—तत्रैव पृ० १६१।
11—तत्रैव पृ० १६२।
12—"अस्तीति सत्तामात्रेण प्रायः शान्तो विभाव्यते" —भावप्रकाशनम्।
13—'तस्य च स्वरूपेणानिर्वचनीयता' —दशरूपकम् ४/४५।

# पञ्चमहायज्ञविमर्शः

—श्रीकैलाशनाथद्विवेदी
जनतामहाविद्यालय, अजीतमल, इटावा (उ०प्र०)

पुरातनभारतीयसंस्कृतिः स्वाप्रतिमवैशिष्ट्य-पूर्णविलक्षणलक्षणैर्विश्वसंस्कृतिषु मूर्धन्या मन्यते। वैदिककालादेव धर्मपरायणार्याणां शिरोमणीभूताः प्रतापिनो भरतास्तपस्त्यागप्रधानया यज्ञीयसंस्कृत्या 'भारत्या' भूमण्डले भासितवन्तः आसन्। पञ्च-महायज्ञा अहिंसात्यागदानकर्त्तव्यपालनप्रधानाया अस्या एव भारतीयसंस्कृतेः प्राणभूता अङ्गाः सन्ति।

**पञ्चमहायज्ञानां प्राचीनवाङ्मये उल्लेखः** :– वैदिकवाङ्मये कर्मकाण्डस्मृतिग्रंथेषु च पञ्चमहा-यज्ञानां महासत्राणां वा समुल्लेखोऽधोलिखितरूपे प्राप्यते। शतपथब्राह्मणे तैत्तिरीयाण्यके चेमे एवं वर्णिताः सन्ति—

"पञ्चैव महायज्ञाः। तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञःपितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति।"
(शत० ब्रा० ११/५/६/७, तैत्ति० आरण्यके ११/१०)

आश्वलायनगृह्यसूत्रेऽपि एषामेवं प्रतिपादनं विद्यते—

"अथातः पञ्चयज्ञाः देवयज्ञो भूतयज्ञः पितृ-यज्ञो मनुष्ययज्ञ इति।"
(आश्व० गृ० ३।१।१-२)

आपस्त[1]म्बगौतम[2]बौधायन[3]—धर्मसूत्रस्मृति-ग्रंथेषु पञ्चमहायज्ञानां परिचयः प्राप्यते सम्यग्रूपेण एवम्—"तेषां महायज्ञः महासत्राणि च संस्तुति अहरहर्भूतबलिमनुष्येभ्यो यथाशक्तिदानम्। देवेभ्यः स्वाहाकार आकाष्ठात् पितृभ्य स्वधाकार ओदयात्रादृष्टिभ्र स्वाध्याय इति[4]"। भगवान् मनुः पञ्चमहायज्ञान् विवेचयन् कथयति—

"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥"
(मनु० ३।७०)

एतेषां पंचमहायज्ञानामन्याभिधानान्यपि अहुतहुत-प्रहुतब्राह्महुतप्राशितरूपेषु प्रचलितानि सन्ति। यथा मनुः प्रतिपादयति—

"अहुतं च हुतं चैव तथा प्रहुतमेव च।
ब्राह्मं हुतं प्राशितं च पंचयज्ञान् प्रचक्षते॥
जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः।
हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम्॥"
(मनु० ३।६७।७४)



उपर्युक्तेषु पंचमहायज्ञेषु चतुर्णां महायज्ञानां वर्णनमथर्ववेदे ६।७।२ इत्यत्र वर्तते। हुतप्रहुतयो-र्वर्णनं बृहदारण्यकोपनिषद्ग्रन्थे (१।५६) वर्तते।

**पंचमहायज्ञानां प्रयोजनम्**—पंचमहायज्ञैस्तु उदारचरितानां गृहस्थधर्मपरायणानां भारतीयानां धर्मबुद्धेर्विशालहृदयस्य च पावनभावनायाः परि-पोषणं भवति। सामान्यतः दैनन्दिनजीवने नित्यं नानाविधाः हिंसाः संपाद्यन्ते गृहस्थजनैः। तासां पापनिवारणायैव पंचमहायज्ञानां सरलसंविधानं सुधीधर्मशास्त्रकारैः कृतमस्ति। गृहस्थजनैः चुल्ली-पेषणोपस्करकण्डनीजलकुम्भकार्येषु प्रायः पञ्चविधाः हिंसाः भवन्ति, तासां सर्वासां निष्कृत्यर्थं मनुहारीत-प्रभृतिधर्मशास्त्रिभिः पंचसूनाक्रमेण पंचसत्राणां पंचमहायज्ञानां वाऽनिवार्यता प्रतिपादिता। अस्मिन् सन्दर्भे मनुर्निर्दिशति —

---

1. आपस्तम्बधर्मसूत्रे १।४।१३।१, १३।१
2. गौतम० ध० सू० ५।८, ८।१७
3. बौधा ध० सू० २।६।१-८
4. गोभिलस्मृतिः २।१६, याज्ञ० स्मृतिः १।१००, मनु० ३।६७, ७४

"पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु बाहयन् ॥"
मनु० ३।६८

"तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ।
पंचक्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥"
(मनु० ३/६९)

हारीतधर्मसूत्रेऽपि पंचसूनानां मनुमतानुसारिणी सम्यक् व्याख्या वर्तते। ब्रह्मचारिणस्तु सामान्यतः गुरुसेवयाऽग्निपूजया वेदाध्ययनेन च प्रथमतिसृभ्यः सूनाभ्यो विमुक्ताः भवन्ति, किन्तु गृहस्थवानप्रस्थजनास्तु पंचमहायज्ञैः पंचसूनाभ्यः पापशून्याः भवन्ति। भगवान् मनुः प्रमाणयति—

"पञ्चैताभ्यो महायज्ञान्न हापयति शक्तितः ।
स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥"
(मनु० ३।७१)

अहिंसायाः पावनभावनया सह पंचमहायज्ञैस्त्यागभक्तिश्रद्धाकर्त्तव्यपालनज्ञानोपासनादिपुण्योद्देश्यानामपि समाजे परिपुष्टिर्भवति। प्राचीनऋषिविधातृजीवजगन्ति प्रति श्रद्धाभक्तित्यागपूर्णकर्त्तव्यपालनमेव पंचहायज्ञानां प्रमुखं प्रयोजनमस्ति। देहधारिणां ब्राह्मीस्थितिलाभार्थमपि पंचमहायज्ञानां सरलं साधनं विद्यते। उक्तम् मनुना—

"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ।"
(मनु० २/२८)

पञ्चमहायज्ञानां सम्पादनाय विधानमत्यन्तं सरलमस्ति। न विद्यते एषु एतादृशी शास्त्रीयनियमानां जटिलता दुष्करता वा यादृशी श्रौतयज्ञेषु। पंचमहायज्ञान् सम्पादयितुं श्रौतयज्ञानामिव पुरोहितस्यापि आवश्यकता नानुभूयते। डॉ० पी०वी०[1] काणेमहोदयमतानुसारं श्रौतयज्ञानां स्वर्गसम्पत्तिपुत्रादिकामनापूर्तिप्रयोजनस्यापेक्षया पंचमहायज्ञानामाध्यात्मिकता-नैतिकता-सदाशयताद्युद्देश्यानि सम्यग्रूपेण अधिकतया च समुपलभ्यते।

**पंचमहायज्ञानां सम्पादनविधानम्**—एतेषां पंचमहायज्ञानां सम्पादनविषयेऽपि धर्मशास्त्रेषु पर्याप्तरूपेण निर्देशाः प्राप्यन्ते। एषां क्रमशः संक्षिप्तविवेचनं प्रस्तूयतेऽस्मिन् शोधलेखे—

**ब्रह्मयज्ञः**—गोभिलस्मृतिः (२।२८-२९) निर्दिशति यत् सान्ध्यपूजासमये मंत्रजप एव ब्रह्मयज्ञः मन्तव्यः। आश्वलायनगृह्यसूत्रे (३।२।१) व्याख्यां कुर्वन्नारायणोऽपि निवेदयति यत् वैश्वदेवात्पूर्वं पश्चात् वा ब्रह्मयज्ञः करणीयः। ब्रह्मयज्ञविषयकं वर्णनं शतपथब्राह्मणे (११।५।६।३-८) विद्यते। प्रतिदिवसीयवेदाध्ययनं स्वाध्यायो वा ब्रह्मयज्ञः कथयितुं शक्यते यस्मिन् जुहूचमसोदृमृतध्रुवास्रुगावभृथाद्युपकरणान्यपि विद्यन्ते। ब्रह्मयज्ञकर्त्तादानफलापेक्षया ब्रह्मयज्ञस्य त्रिगुणं फलं प्राप्नोति। तैत्तिरीयाण्यके (२।११) ब्रह्मयज्ञस्य समयः सूर्योदये, स्थानं ग्रामाद्बहिः (यतः गृहाण्यपि अदृष्टानि भवेयुः)। किन्तु स्थानविषये काचित् बाध्यता नाऽऽसीत् यत ईदृशं प्रतिभाति एतद्विषयकेऽग्रिमे निर्देशे यत् ग्रामाद्बहिर्गन्तुं यद्यसुविधा भवेत्तर्हि ग्रामे एव दिने वा रात्रौ वा ब्रह्मसत्रः सम्पादनीयः। ब्रह्मयज्ञस्यान्तेऽधोलिखितमन्त्रस्य त्रिवारं जापः करणीयः—

"नमो ब्रह्मणे नमो स्वग्नये नमः पृथिव्यै नमः ओषधीभ्यः, नमो वाचे नमो वाचस्पतये नमो विष्णवे वृहते करोमि ॥"
(आश्व० गृ० सू० ३।२।२, ३।३।४)

"ॐ भूर्भुवः स्वः............' पूर्वकं त्रिवारं गायत्रीमंत्रसहितः एकः ऋग्वेदमंत्रस्त्रिवारं "नमो ब्रह्मणे ..........' इति मंत्रजापेन ब्रह्मयज्ञः सूक्ष्मरूपेणापि सम्पादयितुं शक्यते। शांखायनगृह्यसूत्रे (१।४) ब्रह्मयज्ञार्थं ऋग्वेदस्य बहूनां सूक्तानां मंत्रपाठस्य निर्देशो विद्यते। आह्निकप्रकाशे पुरुषसूक्त (ऋक्० १०।९०) संहितान्यमंत्राणां पाठपूर्वकं

1. धर्मशास्त्र का इतिहास (प्रथमभाग) अनु० अर्जुन चौबे काश्यप, लखनऊ, पृ० ३८३

ओङ्कारस्यापि पाठः प्रतिदिनं करणीयः। याज्ञवल्क्यस्मृतौ (१।१०) समययोग्यतानुसारं ब्रह्मयज्ञेऽथर्ववेदसंहितेतिहासदर्शनग्रन्थानामध्ययनं कर्तुं शक्यते। आचमनप्राणायामयोः पश्चादयं संकल्पोऽपि पठनीयः—"श्री परमेश्वरप्रीत्यर्थं ब्रह्मयज्ञं करिष्ये, तदंगतया देवस्याचार्य—(यदि पिता जीवितो न भवेत्तर्हि पितृशब्दो वाच्यः) तर्पणं करिष्ये।"

तैत्तिरीयशाखानुयायिन आरम्भे "विद्युदसि विद्या मे पाप्मानमृतात् सत्यमुपैमि।' अन्ते च–"वृष्टिरसि वश्च पाप्माननृतात् सत्यमुपानाम्।" इति कथयन्ति।

**देवयज्ञः** :—'अग्नौ समित्पातेन देवयज्ञः सम्पाद्यते' इति तैत्तिरीयारण्यकः प्रतिपादयति (तैत्ति० आ० २।१०), आपस्तम्बबौधायनधर्मसूत्रयोरस्मिन् सन्दर्भे कथनमस्ति—"अहरहः स्वाहा कुर्यादाकाष्ठात्तथैतं देवयज्ञं समाप्नोति।"

(बौधा० २।६।४।, आप० ध० सू० १।४।१३।१)

गौतमस्य दृष्टिस्तु देवयज्ञविषये व्यापिनी वर्तते। तदनुसारं होमस्य स्वरूपं एवं निर्दिश्यते–"देवपितृमनुष्ययज्ञाः स्वाध्यायश्च बलिकर्म। अग्नावग्निर्धन्वन्तरिर्विश्वेदेवाः प्रजापतिः स्विष्टकृदिति होमः।" (गोतम० ५।८-६)

देवतानान्ना स्वाहासहितेन मंत्रेण अग्नौ हविषः समिद्भ्यो वा पातः, देवयज्ञः। यथा–"सोमाय स्वाहा, सरस्वत्यै वाहा, अग्नीसोमाभ्यां स्वाहा इति।"

आश्वलायनगृह्यसूत्रे (१।२।२) देवयज्ञेऽधोलिखिताः प्रमुखाः देवताः सूर्याग्निप्रजापतिसोमेन्द्रद्यौपृथिवीविश्वेदेवाब्रह्मादयो निर्दिष्टाः सन्ति। मानवगृह्यसूत्रेऽपि (२।१२।२) विविधदेवानां नामानि प्राप्यन्ते।

मनुयाज्ञवल्क्यौ तर्पणदेवपूजोपरान्ते होमपंचमहायज्ञेषु संयोजयतः[1]। सामान्यतः मध्यकालिकैर्धर्मशास्त्रिभिर्वैश्वदेवोऽपि देवयज्ञरूपेण प्रतिपादितोऽस्ति किन्तु आपस्तम्बधर्मसूत्रे (१।४।१३।१) हरदत्तः[2] देवयज्ञं वैश्वदेवाद् भिन्नं वदति। हारीतः प्रातःकाले होमपश्चात्, मध्याह्ने ब्रह्मयज्ञर्पणपश्चाच्च देवपूजां प्रतिपादयति। देवपूजायाः सूक्ष्मसंकेताः वैदिकसाहित्येऽपि वर्तन्ते[3]। प्रतीयते, तद्युगीनसमाजे देवपूजार्थं देवप्रतिमा अपि निर्मीयन्ते स्म।

**पितृयज्ञः** :—प्रतिदिनं पितृभ्योऽन्नोदकफलपयोभिः श्रद्धयाकव्यार्पणं पितृयज्ञः कथ्यते, यस्मिन् पितृभ्यः एकब्राह्मणस्य भोजनमपि निर्दिष्टं मनुना, किन्तु वैश्वदेवं प्रति विप्रभोजनस्य आवश्यकता न भवति। कथितञ्च मनुना–

"कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा॥
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन्॥
एकमप्याशयेद्विप्रं पित्रर्थे पाञ्चयाज्ञिके॥
न चैवात्राशयेत्कञ्चिद्वैश्वदेवं प्रतिद्विजम्॥"

(मनु० ३।८२, ८३)

**भूतयज्ञः** :-आकाशे विश्वेभ्यो देवेभ्यो बलिमुत्क्षेपानन्तरं भूतयज्ञस्य सम्पादनं सर्वथा समीचीनं मन्यते। दिवाचररात्रिचरेभ्यः स्वपचश्वन्वायसादिसमस्तभूतेभ्यो बलिप्रदानं भूतयज्ञः कथ्यते, योऽतिपुण्यफलप्रदो भवति गृहजनेभ्यः। मनुः भूतयज्ञविषये समीचीनं स्वाभिमतं प्रकटयति—

"शुनांच पतितानां च स्वपचां पापरोगिणाम्।
वायसानां कृमीणां च शनकैर्निवपेद् भुवि॥
एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति।
स गच्छति परं स्थानं तेजोमूर्तिपथर्जु ना॥"

(मनु० ३।६०, ६२)

---

1. मनुस्मृतिः, २।१७६, याज्ञ० १।१००।
2. स्मृतिमुक्ताफलम् (आह्निकः), पृ० ३८३।
3. ऋग्वेदः ४।२४।१० "क इमं दशभिर्ममेन्द्रं क्रीणाति धेनुभिः" ऋक्० ८।११।५ (इन्द्रप्रतिमाः)

**नृयज्ञः (अतिथियज्ञो वा):-** भूतयज्ञानन्तरं नृयज्ञोऽतिथियज्ञो वा सम्पादनीयः, यस्मिन् विधिवद्भिक्षवे ब्रह्मचारिणे वेदतत्त्वविदे ब्राह्मणाय वा भिक्षादानपूर्वकमतिथीनामपि भोजनं भवति। यथा निर्दिष्टं मनुनाऽस्मिन् विषये तथैव समाचरणीयो नृयज्ञः :-

"कृत्वैतद्बलिकर्मैवमतिथिं पूर्वमाशयेत्।
भिक्षां च भिक्षवे दद्याद्विधिवद् ब्रह्मचारिणे"॥
(मनु० ३।९४)

'अतिथिदेवो भव' इति पावनभावनया प्रेरिता गृहिणो नित्यं नृयज्ञं सम्पादयन्ति। विपन्नावस्थायामपि गृहस्थजनेन अतिथिः तृणासनभूमिजलमधुरसत्यवाग्भिः सदैव सत्कर्त्तव्यः। मनुनाऽतिथिपूजाविषये कथितम्—

"सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके।
अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम्॥"
(मनु० ३।९९)

देशकालपात्रानुसारमतिथियज्ञ समुचितं संशोधनमपि करणीयम्। यथा गृहस्थोऽतिथिभोजनात्पूर्वं नवोढाकुमारीरोगिणीगर्भिणी-स्त्रियोऽविचारयन् भोजयेत्। पुण्यफलकामभिः गृहस्थजनैः सायंकालेऽसमयसमागतातिथयः सर्वथाऽन्नजलावाविसादिभिः सत्त्कर्त्तव्याः। अस्मिन् सन्दर्भे मनुर्निदिशति—

"अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना।
काले प्राप्तस्त्वकाले वा नास्यानश्नन्गृहे वसेत्॥"
(मनु० ३।१०५)

"न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत्।
धन्यं यशस्यमायुष्यं स्वर्ग्यं वातिथिपूजनम्॥"
(मनु० ३।१०६)

**समीक्षा**—संसारेऽसारे दुर्लभनरदेहं धारयित्वा मानवः देवर्षिपितृभूतातिथीनां किञ्चिद् ऋणमवश्यमेव धारयति, तेषां एतान् प्रत्याशाकांक्षा वाऽपि गृहस्थजीवने समाधृता भवत्येव। अत एव मानवजीवनस्य सार्थकतायै आनृणाय च पंचमहायज्ञानामनिवार्यता सर्वथा समीचीनैव समाजे। पंचमहायज्ञैः मानवतायाः व्यापकक्षेत्रे निःस्वार्थभावेन त्यागदानज्ञानप्राप्तिकर्त्तव्यपालनश्रद्धोर्थतादिदिव्यमानवीयगुणानामपि संवर्धनं भवति। अत एव मनीषिणा मनुना सर्वसामान्यः सामाजिको निर्दिष्टोऽस्ति—

"स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधिः।
पितृन् श्राद्धैश्च नृनन्नैर्भूतानि बलिकर्मणा॥"
(मनु० ३।८१)

पंचमहायज्ञानां प्राचीनभारतीयसमाजे प्रतिष्ठाऽनिवायता चेदृशी आसीत् यदेतान् असम्पादने नरो निम्नतमो निष्कृष्टः श्वसन्नपि मृत इव मन्यते। मनुना एतेषां गर्हणायामुक्तम्—

"देवतातिथिभृत्यानां पितृणामात्मनश्च यः।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति॥"
(मनु० ८।७२)

पंचमहायज्ञानामकर्ता विद्वान् ब्राह्मणोऽपि 'मलीम्लुच्' इति संज्ञया समाजे सर्वत्र तिरस्क्रियतेस्म। खेदस्य विषयोऽस्ति यत् पाश्चात्ये भौतिकवादीदृष्टिकोणप्रभाविते स्वार्थपरायणे आत्मकेन्द्रिते केवलादिनि भारतीयसमाजे साम्प्रतं पंचमहायज्ञानामनिवार्यता प्रभावी प्रतिष्ठा च शनैः शनै समाप्तप्रायैव संदृश्यते। साम्प्रतन्तु आस्तिकोदारजिज्ञासुकर्त्तव्यपरायणधर्मबुद्धयो भारतीयाः पंचमहायज्ञान् परमास्थया प्रतिदिनं सामाजिकमंगलाय राष्ट्रोन्नतये च सम्पादयितुं संकल्पशीलाः सन्तु। ★

एका लघुकथा—

# स: तस्यां रमते

—डा० रूपनारायणपाण्डेयः राजकीय-इन्टरकालेज सितारगञ्जः, नैनीतालम्-२६२४०५ (उ०प्र०)

वीरसिंह एकस्मिन् महाविद्यालये प्रवक्ता-भूत्। प्रकृत्यातीव विनीतोऽपि स्वाभिमानी स प्राय एकाक्येव वसतिस्म। शनैः शनैः छात्रान् पाठयतः तस्य वत्सरद्वयं विगतम्। एकदा तस्यैकः सुहृद् रविः सायङ्काले तस्यावासकक्षमागतवान्। अभि-वादनान्तरं रविः तं पप्रच्छ 'मित्र! अस्ति रवि-वासरोऽद्य। दिवसे गतं त्वया कुत्रापि, अथवा स्वाध्यायादिभिरत्रैव कालो नीतः।'

सोऽवादीत्-'भ्रातः, न कुत्रापि गतम्। कुत्र गच्छामि ?'

'असि त्वं महाविद्यालयस्यैकः प्रवक्ता प्रति-ष्ठितः। गीयन्ते तवगुणाः। पृच्छसि माम्—कुत्र गच्छामि ? कुत्रापि गन्तुं शक्यते।'

'सौम्य! जानासि त्वं लोकस्थितिः। कस्मिन्नप्यवसरे केनापि किमपि हि वक्तुं शक्यते। निर्दोषाः महापुरुषा अपि निन्द्यन्ते, कथं न मादृशाः? अतः प्रयोजनं विना कुत्रापि न गच्छामि। बहु-शोऽर्थे च सत्यपि गमनाद् बिभेमि।'

'समाजे ये जीवन्ति, ते मिथो मिलन्ति, गृहं यान्ति, सुखदुःखयोश्च सहैव तिष्ठन्ति। इत्थं परस्परं भावयन्तस्ते सुखिनो भवन्ति। एकः त्वमसि, महाविद्यालयं स्वकीयं प्रकोष्ठं च परित्यज्य कुत्रापि न यासि, न च विहरसि ? कोऽत्र हेतुः ? तद् यदि कापि पीड़ा न स्यात्, कथनेनानुग्राह्योऽयं जनः।'

'नाहं सामाजिकजीविताय द्रुह्यामि। समाजं प्रति, न केवलं समाजं प्रति, अपितु समाजे जनं जनं प्रति मम सहानुभूतिर्विद्यते, किन्तु यदा यथार्थमु-पेक्ष्य समाजः प्रतिकरोति, तदा मानुषतासुलभः प्रतिरोधः कथं न भवेत् ?

'भ्रातृवर्य ? तव वचनस्य गाम्भीर्यं नाव-गच्छामि। विशदीक्रियतामेतत्।'

'किमनेन ? किमप्यन्यच्चिन्तनीयम्।'

'सुहृद्वर्य ! अद्यात्रभवतास्यैव रहस्योद्घाटनं क्रियते। अहं किमप्यन्यत् श्रोतुं न कामये। रहस्यमेतच्चिराज्ज्ञातव्यमभूत्।'

'भ्रातः, नास्ति किमपि रहस्यम्। परिणीता अपरिणीतानां गतिं न विदन्ति। समयेऽस्मिन् अपरिणीतो जनः सद्गृहस्थस्य गृहेषु वासाय वसतिं (भाटकगृहं वा) न लभन्ते। जनाः पृच्छन्ति—सपरिग्रहोऽसि, अपरिग्रहो वा ? अपरिग्रहाय मम गेहे स्थानं न वर्तते। एकदा एकस्मै अनूढाय एकं कक्षं दत्तमभूत्। मम कन्यायां तस्य कुदृष्टिर-रस्तीति विज्ञाय सः निर्वासित इति। अपि जानासि त्वमिदं सत्यम् ?'

'जानामि मित्र ! जानामि, किन्तु तव कृते तु साम्प्रतमेषा परिस्थितिर्न वर्तते।'

'मन्ये, मया कथमप्यत्र स्थानं लब्धमेव, किन्त्वनूढानां स्थितिः शोचनीयैवास्ति।'

'अस्त्येतत्, परन्त्वहमत्र भवतामेव मनोदशां ज्ञातुमिच्छामि। कस्मात् त्वं रहस्येकाकी तिष्ठसि ?'

'शृणोतु भवान्। चरित्रमस्ति मम जीवि-तस्य तत्त्वं सारभूतम्। चरित्रं रक्षतः पुरुषस्याप-वादो यदि लोकेन विधीयते, तर्हि स कथं वसतु सुखेन ?'

'युज्यते, किन्तु विशुद्धाचरिते त्वयि कापि विपत्तिः पपातेति न पश्यामि।'

'सौम्य ! किं किं नानुभूतमत्र मयाल्प एवा-वधौ। अनुभवमेकं श्रावयामि, अथवा कोऽर्थोऽनेन ? परिताप एव वर्धते।'

'श्रावयतु भवान्। स्मर्तव्यं भवभूतिवचनम्- 'पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया।'

'सावधानेन श्रोतव्यम्। एकदा विगते वत्सरे ममैकया शिष्यया निवेदितम्—'आचार्य ! सायंकालेऽद्य मम जनकोऽत्र भवन्तं द्रष्टुमिच्छति। अस्ति कार्यविशेषः। अवश्यमागन्तव्यमत्रभवतेति। मया कथितम् "तव गृहस्यावस्थितिं न जानामि। कथय, तव सदनं कुत्र वर्तते"? सा मह्यं तद्गृहस्यावस्थितिं निवेदितवती।

तयासकृत्प्रार्थितोऽहं सायङ्काले तस्याः सदनं गतवान्। कृतातिथ्यः तस्या जनको मामवादीत्–'ममेयं सुशीला न करोति प्रगतिमत्रभवतो विषये। अतः मयि कृपां कृत्वा श्वःप्रभृतीमां पाठयत्वत्र भवान् यथाकालं सुखम्। भवेयमहमतीव कृतज्ञः। मम मतौ भवत्कृपां विनेयं न तरिष्यति परीक्षासागरम्।

'यद्यप्यहं त्वेवंविधे पाठने विरक्तोऽस्मि, तथापि तवानुरोधाद् यथावसरमिमां पाठयिष्यामि' इति मया गदितम्।

तदनन्तरं प्रारब्धं मया पाठनं सुशीलायाः। दिनानि कानिचिदेव विजग्मुः। एकस्मिन् दिने प्रभाते ममैको हितैषी प्रभाते सविधमागत्यावादीत्–'मित्र! अस्ति तव गोपनीयता प्रशंसनीया। त्वं भोजयिष्यसि कदा मधुरान्नम् ? अस्माभिरप्येवमासीच्चिन्तितम्।'

'कस्मात्'–इति मया व्याहृतम्।

'गोपायसि त्वं सत्यम्। न जानासि–विज्ञाः गुप्तमपि रहस्यं विज्ञातुमर्हन्ति'। स्तब्धेन मया पृष्टम्-'मित्र! चिन्तयित्वा किं किं भणसि त्वमेनम्। 'नाहं जाने तव मनोगतम्। स्पष्टीकुरु रहस्यम्।'

'मित्र ! न मया किमपि स्वैरं चिन्तितम्। कथितं केनापि श्रुतमिदं मया–साम्प्रतं सुशीलेति नामधेया छात्री महाविद्यालयस्य वर्तते प्रणयिनी तव। त्वं रात्रौ प्रतिदिनं तस्याः सदनं गच्छसि। युवयोः स्निग्धतरः प्रणयः प्रवर्धते। आश्वेव त्वं तां परिणेष्यसि। किमत्राभिदधासि ? किमिदमसत्यं श्रूयते ?'

मया मनोवेगमात्मनो निरुध्य शनैः शनैः पृष्टः 'मित्र! कोऽस्ति प्रवक्तास्य रहस्यस्य ? मम प्रणयलीलाः कदा केन कथं रहसि लोचनगोचरी कृताः ? किं स जनो विशदीकृतं रहस्यमिदं मम समक्षं वदिष्यति ?'

'मया तस्याभिधानं वक्तुं न शक्यते। रमणीये जने रागः कस्य न भवति। सुशीलाया वदनं मधुरम्, लोचने चलापाङ्गे, उरोजावुन्नतौ, अङ्गानि चान्यानि कमनीयानि-अवलोक्य कस्य चित्ते मदनाभिलाषो नोद्भवेत्। धन्यस्त्वमसि, यस्मिन् तस्याः प्रीतिः प्रावर्धत। न कोऽपि सभायां प्रदर्शयति प्रणयलीलाः। ताः खलु रहसि निष्पद्यन्ते। त्वं तां वीक्ष्य प्रसीदसि। सा तव गुणान् गायति, अवलोक्य च सरागं विहससि। त्वय्यनुरक्तैव सेत्थमाचरति। वद, किं सा त्वां न प्रणयसि। न चेत्, किमिति त्वं प्रतिदिवसं तस्या गेहं यासि ? दयितोजन एव दयितस्य गृहं याति, स्वैरं च विहरति। अधुना त्वमप्रबुद्धो बालक इवाचरसि। इत्थं प्रतीयते, न जानासि किमपि रहस्यम्...।'

उद्विग्नचित्तोऽप्यहं धैर्येण प्रत्यवदम् –'सौम्य! मम प्रकृतिं जानतापि त्वया कथमेवमभिधीयते ? मन्ये, सत्यमविज्ञायैव त्वमेवमुक्तवान्। अहं तु तस्याः सदनं तां पाठयितुं गच्छामि। नास्त्यत्र कश्चिदन्यो हेतुः।'

'किं भणसि ? किं मित्रेण मम मिथ्यैव निगदितम् सः तस्यां रमते। प्रतिदिवसं रात्रौ तद्गेहं गत्वा, भुक्त्वा च तां स्वावासं गच्छति। इति रहस्यं मह्यं तस्या एका परिचारिकाकथयत्।

तया हि गाम्भीर्येण स्वरेणेदमपि निवेदितं यत् प्रकृत्या जनः स सज्जनः प्रतीयते, किन्तु 'तच्चरितस्य मालिन्यं केचनैव विजानन्ति। अपि त्वं तस्य मित्रमिति तुभ्यं निवेद्यते। नैव वक्तव्यमेतद्रहस्यमन्यत्रेति।'

तस्येदं वचनमाकर्ण्य चिन्तितं मया मनसि 'सन्ति सर्वे स्वाधीनाइदानीं जगति। किमप्यपि केनापि कदापि वक्तुं शक्यते। इह कोऽपि कस्यापि चरित्रं न रक्षति। जनाः सर्वेऽपि परापवादे परमं सुखं विन्दन्ति। दैवादहमपरिगृहीतोऽस्मि। पूर्वं मतिमेवं कुर्वता नानुभूतं मया यज्जना अनूढं पुरुषमन्तरेण किं किं चिन्तयति। अनूढः पुरुषः कमप्यपि जनं पश्यति, तत्र किमपि गूढं स्यादित्यत्येव मन्यते। मनुष्यो मनुष्यो हि भवति, तथापि विद्यन्त इन्द्रियाणि, किन्तु परिणीता एतत् सत्यं प्रायशो विस्मरन्त्येव। सर्वत्रैव विराजते प्रभुर्नियन्ता साक्षी च सर्वकर्मणाम्। स गुप्तातिगुप्तान् अपि मनोभावान् वेत्ति। यथाहं स्मरामि-सा बालिका मया सर्वथा शिष्येति शुद्धभावनया ह्यवलोकिता। मन्ये-तस्या रूपं रम्यमस्ति, तस्याः सहजा मधुरा वाग् जनान् प्रसादयति, नवयौवनोद्वेगेन च तस्या वदनारविन्दश्रीः चन्द्रचन्द्रिकेव निखिलं लोकमानन्दयति। किन्तु, किमेतावता? भवतु, मनोभावान् निशम्य जनमिमं तोषयामि। स एव सत्यमाविष्करोतु।'

मया क्षणं विरम्य प्रत्युक्तम् –'मित्र! जानासि त्वं सीताया विशुद्धं चरितम्। तस्याः संशुद्धिरग्नौ विहिताभूत्, परं तस्या देव्या अपि चरितं लोकेन निन्दितम्। पौरैःकथितम्-दुष्टो रावणो बलात् सीतां हृत्वा, अङ्के चारोप्याशोकवाटिकां नीतवान्। युद्धे च तं रावणं हत्वा राघवो राक्षसां वशमापन्नां तामेव सीतां स्ववेश्म पुनरानयत्। अमर्षं पृष्ठतः कृत्वा स सीतासम्भोगजं सुखं हृदये कथमनुभवति? अस्माकमपि दारेषु सहनीयं भविष्यति। राजा हि यथा कुरुते, प्रजा तथानुवर्तते तम्। विचार्यताम्–अहमेको मनो हतो मनुजं जनं वा ईदृशं पुरुषमाश्रित्य यत्किमपि कथ्यते, तत्कथमपाकर्तुं शक्यते। मम दृष्टौ यत्सत्यमभूत्, तत् तुभ्यं निवेदितम्। ईश्वर एवात्र प्रमाणमस्ति। केनोपायेन तं कमप्यपि वापवादिनं पुरुषं तोषयेयम्?।'



इत्थमभिहितः स जनः तद्गृहं जगाम। मित्र! रवे! त्वं स्वयमेव चिन्तय। कथमहं स्वैरं कुत्रापि विचरामि। तया बालिकया सार्धं मम कोऽपि सम्बन्धस्तादृशो नाभूत्। शिष्या अध्यापकस्य भवन्त्येव। यद्यध्यापकः कस्याश्चित् सदनं गच्छति, तर्हि स तस्या प्रणय्यस्ति, स तस्या भोक्तास्ति, व्यभिचारी चास्ति। शिष्या सुतावद् भवन्ति। तस्यां गुरवः प्रीतिं रतिं वा कुर्वन्ति-इत्येतच्चिन्तनं जनानां वा मनोदशामभिव्यनक्ति। न केवलं शिष्याणाम्, अपि तु मित्राणां सदनानि यदि गम्यन्ते, तदापि लोकेनानेनोद्यते, सोऽपरिणीतः तस्य गृहं प्रविशति, जायां च वदति, चिरं तया सह तिष्ठति, तस्यै च यथावसरं यत्किमपि वस्तु प्रेम्णा प्रयच्छति, अतो नियतं सः तामभिलषति। यस्मिन् कस्मिन्नपि दिवसे रहस्यमिदमुद्घाटितमेव भविष्यति। कथय मित्र! कथय, एतादृशे लोके कोऽपि वा कापि वा परिणीता महिला कथं लोकस्य दृष्टौ धैर्यं शीलं चरित्रं च रक्षतु। हेतुनानेन मया प्रयोजनं विना विशिष्टां प्रार्थनां विना कुत्रापि न गम्यते। त्वं लोको वात्र किमपि वदतु।'

वीरसिंहस्येमामनुभूतिमाकर्ण्य रविर्व्याजहार –'सखे! युज्यते। कस्य दोषो निगद्यताम्? वार्तापत्रेषु पत्रिकासु च प्रतिदिवसं पठ्यते, कापि कन्या कमनीया केनापि दुष्टेन बलादपहृता, तदन्वेषणाय विहिताः सर्वे प्रयत्नाः विफलतां गताः, कैश्चित् पुरुषै रात्रौ रहसि सुप्तायाः स्वकक्षायां महिलायाः शीलं साभरणं बलात्कारेण नाशितम्,

काचन कन्या पितुर्गृहं परित्यज्य तत्प्रणयिना सार्धं पित्रा मात्रा वाननुमोदिता कुत्रापि गता, अज्ञातशीलयैकया महिलया कस्यापि सज्जनस्य सर्वं धनं तस्यां विश्वासमुत्पाद्य चोरितम्, यानेषु च काभिरपि महिलाभिः साकं कैश्चिद् धृष्टैरविनय आचरितः, तासां विलपन्तीनां साहाय्यमपि किमपि भटैर्नैव कृतमिति। अस्मात् कोऽप्यपि जनः कस्मिन्नपि सज्जने न विश्वसिति। तथापि सदाचाररतः पुरुषः, पतिभक्तियुता साध्वी महिला वा दुर्जनैः प्राकृतैर्वा निन्दिता सत्यपि कदाचनापि न्यायात् पथो न प्रविचलन्ति पदम्। दुर्दिनं सततं न तिष्ठति। अतस्त्वादृशा साधवः कदाप्यपि दुर्वचनैर्दुर्जनानां खिन्नाः पीडिता उद्विग्ना वा न भवन्ति। ते स्वीयेन पूतेन कृत्येन चरित्रेण च लोकं शिक्षयन्ति। सखे! स्मरसि न त्वं गुरुनानकस्य पूत वाणीम्-दुर्जना एकस्मिन् ग्रामे वसन्तु, सज्जना च सर्वत्र देशस्य प्रत्येकभागेषु तिष्ठेयुः। एक एव चन्द्रः क्षपायां तमोऽपहन्ति, न च तारका असंख्याता।

'सौम्य! त्वादृशाः सज्जनाः सदा न मिलन्ति। अद्य तवागमनाद् मम मनः तुष्यति हृष्यति च। सतां सद्भिः सङ्गः कथमपि पुण्येनैव भवति। त्वया सत्यमभिहितम्, किन्तु सज्जनोऽप्यनारतं दुष्टानां वचनैः व्यथतेतराम् एव, तस्यां च प्रकृतौ कदाचिद् विकाराः सज्जायन्त एव। सोऽपि मनुज एव, न देवो भगवान् वेति! मनुष्यस्य धीरस्य मनोऽपि चञ्चलं भवति। 'चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम्। अतो विपरीते परिवेशे, उपस्थितेषु च विषयेषु तत्र क्षुब्धता व्यथा वा मार्मिकी नैसर्गिकी भवति।'

'मित्र! तव सामीप्यादहमद्यातीव प्रसीदामि। निशा चागता विलसति। कालो विलम्बते। अनुजानीहि मां गमनाय।'

'मित्र! कथमहं वदानि। इदमपि गृहं तवैव। सनाथीक्रियतामिदम्।'

'भ्रातः, आगमिष्यामि पुनः। अननुमतोऽहं पत्न्या। नमस्ते।'

'नमस्ते। तव पत्नीभवितः प्रशंसनीयास्ति। 'यत्र नार्यस्तु पूज्यन्ते, रमन्ते तत्र देवताः।' अलं-विलम्बेन। गच्छ, नमस्ते।' ★

---

# ※ गुणपुराणम् ※

—डॉ० दे० खं० खरवंडीकरः
प्रधानसम्पादकः 'गुञ्जारवस्य'
कालेश्वरमन्दिरम्, घुमेरगल्ली, अहमदनगरम्
(महाराष्ट्रः) पिन–४१४००१

कणमात्रं गुणं स्वीयं गणमात्रं करोति यः।
स बुद्धिमान् मनुष्येषु चतुरो गुणसागरः ॥१॥

गुणो न गुणतामेति यावन्नान्येन गीयते।
मुकुन्दाधरसंसर्गात् मुकुन्दो मुरलीधरः ॥२॥

बिन्दुमात्रं गुणं कुर्यात् सिन्धुमात्रं जनोऽवनौ।
यशो द्रव्यं च तेनैव प्राप्नोति जगतीतले ॥३॥

यदि सन्ति गुणा लोके ज्ञापयेत् तान् नरः स्वयम्।
इन्द्रोऽपि लघुतां गच्छेत् स्वयमख्यापितैर्गुणैः ॥४॥

गुणोऽप्यगुणतामेति स्वयं चेन्न प्रकाशयेत्।
स्वगुणख्यापनं लोके कला कलियुगे मता ॥५॥

यदि नास्ति गुणस्तात मा स्म चिन्ताकुलो भव।
अशीलमेव पर्याप्तं गुणो भवतु वा न वा ॥६॥

गुणानामेव दौरात्म्यात् धुरि धुर्यो न युज्यते।
अग्रगामी भवेदेष तस्मादयमुपेक्ष्यते ॥७॥

प्रायो गुणी गुणं द्वेष्टि गुणं वेत्तीति दुर्वचः।
गुणी हि गुणिनं दृष्ट्वा श्वानवद् गुर्गुरायते ॥८॥

★

# कविता-कलापः

—श्री हर्षदेवमाधवः अहमदाबादस्थः

## (१) अंधकारे सरकसदर्शनम्

सहसा विद्युत्प्रवाहच्छेदे जाते
लोहजालिकाभ्यो वर्नाहिंस्रता
घ्राति
उष्णमनुष्यरक्तगन्धम् ।
हेट-पेन्ट-धारको विदूषकः (Joker)
स्वमुखात् प्रस्वेदस्विन्नाङ्गुलिं प्रमृजति ।
वाद्यवादकानां कराग्रेषु
संगीतं जोषमास्ते ।
बालकानां स्त्रीणां चीत्कारेषु
प्रेक्षकपंक्तयः पश्यन्ति
करालं हिपोपोटेमस–शरीरं
अभिद्रवन्तं अन्धकारम् ।
शापमूर्च्छिता विद्युद्दीपाः पुनरपि
जृम्भारम्भं नाटयतः
प्रकाशवन्तो भवेयुस्तत् पूर्वमेव
रींगमास्टरस्य
कम्परहिते स्तब्धे हस्ते,
रक्तधावनशून्ये हृदये,
निमेषरहितयोर्नेत्रयोः
निवसेत् मृत्युप्राप्तिक्षणम् ॥

## (२) हिमवर्षाः

वर्च-आँक-फर-स्प्रुस–वृक्षाणां
पर्णेषु
हिमबिन्दुभिर्गृहं कृतम् ।
प्लमवृक्षपृष्ठे
सूर्योऽपि स्थगितोऽस्ति ।
सेबल-मस्क-भिन्स्क-वीपर–प्राणीनां
चर्म रोमाङ्कुरवने
क्रीडति शीतवायुः ।
शैत्यस्य कृपाणधारा
स्पृशति सफरजन (Apple)–फलरक्तवर्णम् ।
हिमीभूतं
कॉड-सामन-मीन–कदम्बं
न्यू फाउन्डलेन्ड-समुद्रतटं त्यक्तुं
हिमखण्डानां नीचैर्जलप्रवाहवत् सहसा धावति ।
स्तब्धस्थगितनौकाः
हिमरश्मिबद्धा इव तटस्था एव वर्तन्ते ।
सैन्टलोरेन्स–नदी
प्रेम्णः स्मृतिर्भूत्या
हृदयं विदारयति ॥

## (३) तव श्वासः

दर्पणे नास्ति ते मुखम्,
मुखचूर्णपात्रे नास्ति ते गण्डस्थलम् ।
अलक्तकपात्रे नास्ति तेऽधरः,
कज्जलपात्रे नास्ति ते पक्ष्मसंहतिः ।
मञ्जुषावक्षीयवस्त्रे (ब्रेसियरे) नास्ति ते हृदयम् ।
रक्तचर्मपट्टिके उपानद्द्वये
नास्ति ते पदमिथुनम् ।
केवलं श्वास एव तेऽस्ति,
म्लानकामिनीपुष्पे
तव प्रेषिते मदलेखे………… ॥ ★

*यात्रावृत्तम्*

# श्रीअमरनाथ–संस्कृतसाहित्य-यात्रा

—श्रीकृष्णनारायणपाण्डेयः
आकाशवाणी, (लखनऊ)

संस्कृतं भारतवर्षस्य सांस्कृतिकभाषा रूपेण सम्पूर्णविश्वस्याध्यात्मिकभाषारूपेण समसामयिकमहत्त्वं भजति। लोकजीवनं संस्कृतमयं भवतु, संस्कृतक्षेत्रे शैथिल्यं विनष्टं भवतु। 'सर्वं संस्कृतं भवेत्' इति ध्येयेन श्री अमरनाथगुहा-कश्मीरप्रदेशे रक्षाबन्धनपर्वणि संस्कृतदिवसे संस्कृतसाहित्ययात्रारूपेणाखिलभारतीयसंस्कृत-कवि-सम्मेलनायोजनप्रायोजना विनिर्मिता।

सम्मेलनमिदं देशस्य प्रतिप्रदेशप्रतिनिधि-कवियुतं समस्तसंस्कृतसंस्थाप्रतिनिधियुतं भवेत्, इति प्रयासः प्रचलितः। अस्मिन् महाभियानसमये डा० श्रीप्रकाशमित्रशास्त्रिणा 'पारिजातम्' मासिकपत्रस्य विशेषाङ्कप्रकाशनं कृतम्। विशेषाङ्कस्य विमोचनसमारोहः श्री रणवीरसंस्कृत-पुस्तकालये जम्मूनगरे समायोजितः २०-८-८५ दिनाङ्केऽष्टवादने प्रातःकाले। पत्रिकाविमोचनं डा० वेदकुमारी घई (संस्कृतविभाग, जम्मूविश्व-विद्यालयस्य) द्वारा सम्पादितम्। महाराष्ट्रप्रदेशतः समागतेन श्रीहरिशरण–अम्बिकादत्तशाण्डिल्येन संस्कृतसाहित्ययात्राप्रतिनिधित्वं कृतम्। अस्मिन्नवसरे स्थानीयविशिष्टविद्वांसोऽपि सम्मिलिता अभूवन्, येषु डा० रामप्रतापः, डा० जगपूर्णदास–शास्त्री, डा० धनीराम इत्यादयो प्रमुखाः।

२६-८-८५ दिनाङ्के जम्मूतः पहलगांवकृते बसयात्रा नियोजिता। 'जयतु जयतु जय अमरनाथः', 'जयतु संस्कृतम्, जयतु भारती' 'संस्कृतसाहित्ययात्रा सकला भवेत्' इत्युद्घोषः ३५ सदस्यीयदले क्रियते स्म। स्वस्तिवाचनं, शान्तिपाठः, स्तुतिश्लोक–गायनं प्रातः सायं प्रार्थनाङ्गभूतम्।

रात्रौ अकस्मात् बसयानं एकस्मिन् खाते निपतितम्। यात्रा बाधिता परन्तु श्री अमरनाथ-कृपया सर्वे पूर्णरूपेण सुरक्षिताः। हरीतिमायुत-पर्वतप्रदेशे नीलाकाशावरणे एकस्मिन्नेव स्थाने सर्वे शयिताः भूमौ। २७–८–८५ दिनाङ्के प्रातः जम्मूनगरं सूचना प्रेषिता, नवीनं बसयानं आगतम्। जम्मू-पहलगाँव–पर्वतीयमार्गः भयङ्करः प्रतिभाति परन्तु प्राकृतिकसुषमायुत् मनोहरश्च। कश्मीरघाटीक्षेत्रं प्रवेशाय जवाहरसुरङ्गः प्रायः द्विकिलोमीटरलम्बमानः वर्तते। कश्मीरघाटी-क्षेत्रं प्रायः समतलं मक्काशालिक्षेत्रयुतं सुन्दरं प्रतिभाति।

पहलगाँवस्थानं श्रीनगरतः आगत-यात्राछड़ी विश्रामस्थलम्। विशालं शिवमन्दिरं यात्रीविश्राम-स्थलञ्च। मन्दिरप्रसादरूपेण निःशुल्क-भोजन-व्यवस्था वर्तते। पहलगांवतः श्रीअमरनाथगुहा-पर्यन्तं प्रायः सर्वत्र एवमेव व्यवस्था। प्रदेशीय-शासनद्वारा चिकित्सादिकं सर्वमावश्यकं व्यवस्थापनं सुष्ठुरूपेण वृत्तं वर्तते। पहलगाँवतः 'चन्दनवाड़ी'–पर्यन्तं टैक्सीमार्गो वर्तते। चन्दनवाडीतः शेषनाग-जलाशयपर्यन्तं पदयात्रा एव सम्भवा। रात्रौ सर्वत्र शीताधिक्यम्। पर्वतेषु मध्ये स्वच्छनीलजल–युतशेषनागजलाशयो मनोहरः प्रतिभाति। शेष-नागतः पञ्चतरणीस्थानपर्यन्तं पर्वतशिखरा हिम-मण्डिताः शोभन्ते। पञ्चतरणीतः श्रीअमरनाथ–गुहा प्रायः ६ किलोमीटर-दूरे वर्तते।

श्रीअमरनाथगुहाक्षेत्रे विज्ञापनरहितं कस्यापि श्रेष्ठिजनस्य निःशुल्क-भोजनव्यवस्था

प्रचलति, तत्रैव एकस्मिन् विताने श्रीअमरनाथ-संस्कृतसाहित्ययात्राया "अखिलभारतीयसंस्कृत-कवि-सम्मेलनस्य" आयोजनव्यवस्था कृता।

श्रीअमरनाथगुहासम्मुखं बहुजनसम्मर्दः, येन केन प्रकारेण दर्शनं प्राप्तम्। श्रीअमरनाथ-गुहायामनिर्वचनीमानन्ददायकं वातावरणम्, न शीतं नोष्णम्। हिमनिर्मितं शिवलिङ्गःस्वरूपं तथैव श्रीगणेशपीठः श्रीपार्वतीपीठश्च प्रकृति-देवत्वं प्रमाणितं करोति।

श्री अमरनाथदर्शनानन्तरं 'अखिलभारतीय-संस्कृतकविसम्मेलनस्य' शुभारम्भो जातः। सम्मेलने अर्जेन्टाइना – इजरायल – जर्मनी – देशतः समागताः यात्रिणोऽपि सम्मिलिताः। सम्मेलने सम्मिलिता कवयः सन्ति—

१. श्री हरिशरण अम्बिकादत्तशाण्डिल्यः — महाराष्ट्रतः
२. डा० विश्वनाथभट्टाचार्यः — वाराणसीतः
३. डा० मनोरमा रञ्जन — लक्ष्मणपुरतः
४. डा० रोहिताश्व शर्मा — हरियाणातः
५. डा० सुधाकर मालवीयः — वाराणसीतः
६. डा० माण्डवी चन्द्रा — गोण्डातः
७. डा० मिथिलेश मिश्रा — पटनातः
८. डा० बिब्बोरानी शुक्ल — गोरखपुरतः
९. डा० योगमाया — कानपुरतः
१०. स्वामी पद्मानन्द —हिमाचलप्रदेशतः
११. डा० दयाशङ्करत्रिपाठी — उन्नावतः
१२. श्री कृष्णनारायणपाण्डेयः — लक्ष्मणपुरतः
१३. श्रीमती उमा पाण्डेय — ,,
१४. कु० वीरेश्वरी श्रीवास्तव — ,,

अर्जेन्टाइना-देशस्य सुश्री स्वामीताराचन्द सरस्वती (B 8/9 वसन्तविहार, नई दिल्लो) द्वारा संस्कृतगीतं प्रस्तुतम्। इजरायलदेशस्य श्री अवीव एटनर (61-Shouhanat, Hacarnen, Haifa, Israel-23242) तथैव फैडरल-रिबब्लिकजर्मनीदेशस्य डा. क्लाउस बूख (Q 5, Datten Soneweg 16, D 8700, Wine-burg, F. R. G.) द्वारा स्वयात्रानुभूतयः व्यक्ताः।

श्रीअमरनाथसंस्कृतसाहित्ययात्रायां सम्मि-लिताः अन्येऽपि संस्कृतानुरागिणः सुश्री इन्दिरा अग्निहोत्री, डा० सुनीता शर्मा, श्री हरीश शर्मा, डा० शशिरञ्जन तिवारी, श्रीअरविन्द मिश्रः, सुश्री प्रज्ञा, श्री समन्वयपाण्डेयः, डा० सफिया परवीनः, श्रीमती लक्ष्मीनारायण शर्मा, श्री लक्ष्मी नारायण शर्मा, कु० कविता शर्मा, (लखनऊ), श्रीमती सर्वाणी भट्टाचार्य, श्रीमती मीरा भट्टाचार्य, श्रीमती सरला मालवीय (वाराणसी), डा० आर० के० गोयलः (हरियाणा), श्री श्रीकृष्ण अवस्थी (म०प्र०), श्रीमती सीमादत्तः (झांसी), श्रीमती सूफिया परवीनः, श्री कैसरः (सुल्तानपुर), श्रीराम-गोपालमिश्रः (फर्रुखाबाद) इत्यादयः आसन्।

श्रीअमरनाथसंस्कृतयात्रायाः अन्तिमकार्य-क्रमः ४-९-८५ दिनाङ्के संस्कृत-विभागजम्मूविश्व-विद्यालयद्वारा स्वागतसमारोहरूपे समायोजितः। कार्यक्रमस्याध्यक्षता जम्मूविश्वविद्यालयस्य कुलपति-डा० एम०आर० पुरी द्वारा कृता। कार्य-क्रमे स्थानीयसंस्कृतकवयः डा० कौशल्यावल्ली, डा० वेदकुमारी घई, डा० केदारनाथशर्मा, डा० धनीराम शास्त्री, डा० शम्भूनाथ आचार्यश्च समुपस्थिता आसन्।

डा० शान्ता शर्मा, संयोजिका विश्वसंस्कृत प्रतिष्ठानं जम्मू(२४८ न्यू फ्लैट्स, जम्मू-१८०००५) द्वारापि विहितमभिनन्दनम्।

अस्य सम्मेलनस्यायोजने विश्वसंस्कृत-प्रतिष्ठानं लखनऊ–शाखाद्वारा 'महिला सांस्कृतिक-सङ्गम' लखनऊ माध्यमेन डा० राजदेवमिश्रः प्राचार्यः साकेतमहाविद्यालयः अयोध्या, प्रादेशिक-संस्कृतसंरक्षणसमितिजम्मू, तथा च श्री डा० प्रकाश मित्रशास्त्री सम्पादक– 'पारिजातम्' द्वारा यथा-शक्यं योगदानं कृतम्। ★

# श्रद्धाञ्जलिः सादरम्

—श्री केशवप्रसाद उपाध्यायः
प्राध्यापकः संस्कृतविभागे
गुरुकुलमहाविद्यालयो ज्वालापुरम् (हरिद्वारम्)

[हरियाणाप्रान्तस्य करनालनगरनिवासिनः रायसाहबचौधरीप्रतापसिंहस्य दिवं याते ४-८-८५ दिनाङ्केऽर्यनगरे नारायणभवने समायोजितायां शोकसभायां प्रस्तुता श्लोकबद्ध-श्रद्धाञ्जलिः प्रकाश्यतेऽत्र।
—सम्पादकः]

(१)

'चौधरी' सर्वलोकस्य सर्वकष्टनिवारकः।
कथं न स्याद् सदा वन्द्यः प्रतापातिशयस्तथा ॥

(२)

परोपकारे विहितादरो यः
धर्मैकधाराधृतपुण्यपूतः।
साधु-स्वभावः भवभीतिमुक्तः
सदैकलक्ष्यः परमेशप्राप्तौ ॥

(३)

धर्मैकसेवार्थधृतः शरीरः
कर्मैकलक्ष्यप्रतिबद्धचेतः।
सदैकदेवस्य विशेषचिन्ता
नान्या कृता कापि स्वकीयचिन्ता ॥

(४)

सोऽलौकिकः धर्मधरातिशायी
मानी च दानी गुणकर्मलोके।
सोऽयं गुणानां विदुषां समक्षं
एको हि रूपः परमेश्वरस्य ॥

(५)

सर्वेषु कालेषु धृतव्रती यः
पुण्यप्रतापातिशयस्सदा यः।
स 'चौधरी' कस्य न वन्दनीयः
'सिंहो'–त्तरो नाम 'प्रताप'–पूर्वः ॥

(६)

'प्रतापसिंहः' परताप–नाशने
सदाऽद्वितीयः परकार्यसाधने।
यथैव विद्या–हितसर्वपालकः
तथैव लोकोत्तरकर्मसाधकः ॥

(७)

धन्योऽयं धनधान्यधीधनपतिर्धीरेषु वीरेषु च
विद्यादानहितैकलक्ष्यनिरतो मानी सदाऽलौकिकः।
पुण्यादर्शव्रती महोन्नतमना आसीच्च धर्मोद्धुरः
तस्यैवाखिलपुण्यकर्मकृतिने श्रद्धाञ्जलिः सादरम् ॥

★

---

# कलिमाहात्म्यम्

—श्री प्रा॰स॰शं॰ जोशी

विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन।
न गृहे पूज्यते विद्वान्, नृपः सर्वत्र पूज्यते ॥१॥

असारे खलु संसारे सारः सोमरसः खलु।
निपीय दुर्गतिं याति कदा पतति पल्वले ॥२॥

भाषासु मुख्या कुटिला श्राव्या ग्राम्या हि भारती।
मातरं भगिनीं हत्वा तस्या आरम्भ इष्यते ॥३॥

मन्त्रिणो विदुषश्चापि तुलना नैव सङ्गता।
मन्त्री सर्वहरो नूनं विद्वान् हरति पुस्तकम् ॥४॥

★

# सत्योक्तयः

—डॉ० सत्यव्रतशर्मा 'अजेयः'

(१)

## रे गाङ्गेयाः !

नावलोकिता युष्माभिः
गङ्गायास्तुङ्गतरङ्गाः
तरङ्गानाञ्च विविधरङ्गाः
नेक्षितो लास-विलासो वा
न च चलबिन्दूनां मौक्तिकत्वम्,
उज्ज्वलजलस्य जीवनतत्त्वम् ।
यतो हि युष्मभ्यम्
सरलतया साऽऽसीत् सुलभा
अत एव युष्माभिर्न सा पूजिता
नाऽऽराधिता, न च वन्दिता
तस्या परमपवित्रमतिविचित्रम्
निर्मलशीतलजलमपि
न युष्मभ्यमर्घ्यम्
नाचमनीयम्
न समर्पणीयम्
न तर्पणीयम् ।

(२)

## रे वन्याः !

युष्माभिश्चन्दनशैत्यम्
सुखदा सा सुगन्धिः
स गुणः स धर्मः
सा प्रकृतिस्तत्कर्म
स चोपयोगस्तन्महत्त्वम्
अज्ञतया नाभिज्ञायि
केवलं तत्स्वरूपं काष्ठमात्रमेव विनिश्चितम् ।
परम्
तत्तु चन्द्रमौलिभालानाम्
भूपाला .ां दिक्पालानाम्
अप्सरसां सुरबालानाम्
ऋषीणां मुनीनाम्
यतीनां व्रतिनाम्
सुधीराणां वीराणाम्
वरीवर्ति विभूषणम्
देवार्चन-साधनम्
पूजनोपकरणम् ।

(३)

## हंहो विशाल तरुवर !

भवानुच्चतरः
सुदृढः परमकठोरः,
वयं वीरुधः
अतीव लघुतराः सुकोमलाः
परमस्मासु को दृढतरः ?
अस्य निर्णयं
कदाचित् काले
करिष्यन्ति झञ्झानिलाः ।

(४)

## निर्धनः

न स हिंस्रको
न कुत्सितो
न चौरो न बलात्कारनिरतो
न मद्यपो नाभियुक्तो
न च दण्डितो न्यायाधीशेन केनापि
परन्तु तदापि स बन्दीगृहे विद्यते
यतो हि
स निर्धनो निरुपायो
निःसहायः
अत एव
यावत् पर्यन्तं न्यायप्रक्रियान्तो न भवेत्
तावत् तस्य मोक्षो न । ★

# तथ्य–कथ्यम्

## प्रा. रामचन्द्रनरसिंह अरठ्ठी-कट्टीमहोदयानामभिनन्दनम्

तिरुपतिनगरस्थ–केन्द्रीयसंस्कृतविद्यापीठस्य प्रवाचकाः शिक्षाशास्त्रिविभागप्रमुखाः प्राध्यापकवराः विविधशिक्षणोपाधिभिः विभूषिताः **श्रीरामचन्द्रनरसिंह अरठ्ठीकट्टी महोदयाः** कतिपयेभ्यः मासेभ्यः प्राक् **श्रीवेङ्कटेश्वरविश्वविद्यालयेन पी-एच्.डी.** उपाधिप्रदानेन सम्मानिताः अभवन् इत्येतत् तेषामसङ्ख्यच्छात्राणां बहूनां प्रियसुहृदं, सर्वेषां परिचितानां प्राध्यापकानामध्यापकानाञ्च परमसन्तोषप्रदं भवति। अतोऽनेकैः तच्छिष्यैस्तेषां सादरं सस्नेहं सानन्दं चाभिनन्दनमनुष्ठीयते।

प्रा. अरठ्ठीकट्टीमहोदयैः विरचिते श्रीवेङ्कटेश्वरविश्वविद्यालयेन च स्वीकृते शोधप्रबन्धेऽस्मिन् पूर्व-पश्चिम-दक्षिणोत्तर-प्रदेशीयानां प्राचीनपरम्परागतपण्डितानां विश्वविद्यालय-महाविद्यालय-माध्यमिकविद्यालय-संस्कृताध्यापकानां छात्राणाञ्च बहुविधान्याशुभाषणानि, सम्भाषणानि, सामूहिकसम्भाषणानि, मिथः सम्भाषणानि, दूरध्वनि–नभोवाणीसम्भाषणानि च संगृह्य तेषां विशेषाणां तथा वाक्यरचनाप्रकाराणां विश्लेषणं विधाय सुलभसंस्कृतसम्भाषणकार्यक्रमे कथं प्रयोगः कार्यः इति प्रदर्शितं भवति। एषः शोधप्रबन्धः पाश्चात्यविद्वद्वरैरपि परीक्षितः संस्तुतः पुरस्कृतश्च।

—श्री पं० राजारामशास्त्री काटेकरः

## संस्कृतभाषाप्रचारिसभायां संस्कृतसमारोहः

संस्कृतभाषाप्रचारिसभायां १९८५ वर्षीयसितम्बरमासस्य द्वादशदिनाङ्के महता समारोहेण संस्कृतदिवसः सुसम्पन्नः। महाराष्ट्रशासनस्य सूचना– जनसम्पर्क– महासंचनालयस्योपसंचालकः श्री एच्०जी० मिरजगावकरमहोदयाः प्रमुखातिथिपदं व्यभूषयन्।

प्रसङ्गेऽस्मिन् नागपुरभूषणभूतानां भट्टजीघाटे–भाउजीघुले–पंढरीनाथशास्त्रीघाटे–इतिविख्यातवैयाकरणानां सम्मानं श्रीमतां अम्बादासशास्त्रि–पाण्डे–महाभागानां करकमलाभ्यां सम्पन्नम्।

## आर्यसमाजस्य वार्षिकोत्सवः

नई दिल्ली–अनारकली–मन्दिरमार्गस्थितस्य आर्यसमाजस्य ६१ तमः वार्षिकोत्सवः नवम्बर–मासस्य २२ तः २४ दिनाङ्कं यावत् भविष्यति। अनेकेषु धार्मिककार्यक्रमेषु बहवो वक्तारः स्वागमनेन स्ववक्तृत्वकलावैशिष्टेन चालङ्करिष्यन्तीति हर्षविषयः।

## नारायणभवने शोकसभा

ज्वालापुरीयार्यवानप्रस्थाश्रमनिकटेऽऽर्यनगरनामके स्थाने नारायणभवने रविवासरे ४-८-८५ तमे दिनाङ्के स्व० रायसाहब–चौधरीप्रतापसिंहस्य स्मृतौ शोकसभा समायोजिता, यस्याध्यक्षता प्रसिद्धवेदपण्डितेन प्रियव्रताचार्येण विहिता। यत्र आर्यसमाजविषयकविविधसेवासु श्रीप्रतापसिंहस्य विशिष्टसेवा–विषयेऽधिकृता चर्चा विद्वद्भिर्कृता। शोकसभायाः संयोजनं वेदविदुषार्यप्रतिनिधिसभाभूतपूर्वाध्यक्षेण श्रीविश्वबन्धुशास्त्रिणा विहितम्। सभायां डॉ० नारायणमुनिश्चतुर्वेदः, प्रो० वेदप्रकाशशास्त्री, डॉ० रामेश्वरदयालगुप्तः, डॉ० रामप्रकाश शर्मा, डॉ० सत्यव्रतशर्मा 'अजेयः', श्रीकेशवप्रसादोपाध्यायः–इत्यादयोऽनेकेऽपि पञ्चपुरीयाः विद्वान्सः समुपस्थिता आसन्। शान्तियज्ञानन्तरं सर्वैरपि स्वश्रद्धाञ्जलयः तेभ्यः समर्पिताः।

★

# विदुषां सम्मतयः

❀ श्रद्धेयाः सम्पादकमहोदयाः,

भवद्भि. प्रकाशितः 'भारतोदयः' यथासमयं प्राप्यते। संस्कृतभाषायां इमं पठित्वाहमतीवानन्दमनुभवामि। भारतोदये वैदिकधर्मसिद्धान्तविषयका लेखा स्वल्पा एव भवन्ति। महाकविभास-पण्डितराज-जगन्नाथ-कालिदासविषयकान् लेखान् न्यूनीकृत्वा सैद्धान्तिकलेखा वर्धनीया इत्यनुभवाम्यहम्।

यद्यपि भवद्भिरष्टादशपृष्ठात्मके भारतोदये षड्त्रिंशत्पृष्ठात्मिका सामग्री निवेश्यते। सूक्ष्मतरं वर्णानामाकारं नेत्रदृष्ट्या हानिकारकं भवति, एतत्तु जानन्त्येव भवन्तः। अतएव पृष्ठसंख्यां संवर्ध्य वर्णानामाकारमपि स्थूलीकरणीयम्।

**—जगदीशप्रसादः 'हरितः'**
पीपलोन, नीमच (म०प्र०)

❀ श्रद्धेयाः सम्पादकमहाभागाः,

नमस्कारपुरस्सरमेतदभ्यर्थना वर्तते यत् भारतोदयस्यान्यापि व्यावहारिकीमुपयोगितां संवर्द्धयितुं रुचिप्रदान्, आधुनिकज्ञानविज्ञानयुक्तान् समसामयिकीघटनाक्रमैः सम्बद्धान् निबन्धानामन्त्रयन्तु प्रकाशयन्तु च। विषयेऽस्मिन् मासिक-पाक्षिक-साप्ताहिक–हिन्दीपत्रिकाभिः कादम्बिनी-धर्मयुग-सरितादिभिः मार्गं निर्दिष्टं वर्तते।

प्रायेण सर्वास्वेव संस्कृतपत्रिकासु उपर्युक्तसामग्रीणां सर्वथाऽभाव एव दरीदृश्यते। पत्रिकासु वेद-वेदान्त-साहित्यादिविषयमवलम्ब्य विदुषां गूढविवेचना तु अनिवार्या, साकमेव संस्कृतस्य व्यावहारिकीकरणाय रुचिप्रदसमसामयिकज्ञानविज्ञानवर्धकराष्ट्रियन्ताराष्ट्रियघटनाक्रमाणां प्रामाणिकी विवेचनाऽपि नितरामावश्यकी। एतदर्थं यदि पत्रिकापृष्ठानां शुल्कस्य चाभिवृद्धिः स्यात्, तदपि कार्या।

७४ वर्षीय पत्रिकायाः नवमाङ्के स्वामिविश्वमित्रानन्दमहाभागस्य 'अन्धविश्वासः' सामयिकः, अत एवास्माभिः ग्राह्यः। लेखका धन्यवादार्हाः श्लाघ्याश्च।

**—दामोदरप्रसादशास्त्री**
श्रीरंगलक्ष्मी–आदर्श–संस्कृतमहाविद्यालयः
वृन्दावनम्, मथुरा (उ०प्र०)

❀ श्रीमन्तः श्रीहरिगोपालशास्त्रिणः
भारतोदयसम्पादकाः

ज्वालापुरीय-गुरुकुलमहाविद्यालयस्य मासिकं संस्कृतपत्रं भारतोदयमुपलभ्य चेतसि नितरां प्रहृष्यामि, वाञ्छामि च पत्रमेतत् निरन्तरं प्रगतिं कुर्यात्।

**—पं० रघुनाथप्रसादश्चतुर्वेदः**
राजराजेश्वरीसंस्थान, द्वारकाधीशमन्दिरपृष्ठभागे
२, दशभुजी गणेश, मथुरा (उ०प्र०)

❀ श्री सम्पादक जी,

"भारतोदयः" का जुलाई-अंक मिला, जिसे देखकर मन प्रसन्न हुआ। आप जैसे विद्वान् सदा संस्कृत की सेवा में लगे रहें, ऐसी ईश्वर से सदा कामना करता हूँ।

**—रामकिशोर मिश्र**
प्रवक्ता-संस्कृतविभाग
महामनामालवीयमहाविद्यालय, खेकड़ा (मेरठ)

❀ मान्याः सम्पादकवर्याः
सादरं नतिः।

भवद्भिः प्रेषितः भारतोदयः सम्प्राप्तः। अवलोकितमधीतमेतत्पत्रमाद्योपान्तम्। भाषा-भाव-विषय-कलेवरादिकं सकलमपि हृद्यमस्य पत्रस्य। आशासे सततं समुन्नतिपदं समेष्यति भवतां तत्त्वावधाने पत्रिकैषा। विदुषामनुचरः

**—वागीश्वरः**
प्राचार्यः, दयानन्दोपदेशकमहाविद्यालयस्य
आदीपुराश्रमः, यमुनानगरम्, अम्बाला (हरियाणा)

# महाविद्यालय-समाचाराः

❀ महाविद्यालयसभाप्रधानेन डॉ० गौरीशङ्कराचार्येण महाविद्यालयस्य मुख्याधिष्ठातृपदे गुरुकुलस्यास्यैव पूर्वछात्रस्य मुजफ्फरनगरजनपदान्तर्गत-मांडला-ग्रामनिवासिनः श्रीमतः अशोककुमार-शास्त्रिणो नियुक्तिर्विहिता। श्रीशास्त्रिणो नेतृत्वे महाविद्यालयोऽयं पूर्वापेक्षयाधिकप्रगतिपूर्ण-विकासमार्गे पदं स्थास्यतीति नः प्रत्ययः।

❀श्री प्रकाशवीरशास्त्रिस्मारकोपदेशकमहाविद्यालयस्य १९८४-८५ वर्षीयवार्षिकपरीक्षाः २२-८-८५ दिनाङ्के सुसम्पन्नाः। वर्षेऽस्मिन् सिद्धान्तशास्त्रि-परीक्षार्थं सप्तपरीक्षार्थिनः सम्मिलिता अभूवन्। तेषु षट्संख्याकाश्छात्राः समुत्तीर्णाः, ते च प्रथमां श्रेणिमधिगत्य परं प्रसादं समवाप्ताः।

❀ डॉ० नारायणमुनेश्चतुर्वेदस्याध्यक्षतायां गुरुकुल-ज्वालापुरपरिलसितार्यसमाजस्याधिवेशनं महता समारोहेण समायोजितम्। अवसरेऽस्मिन् महा-विद्यालय-प्राचार्यवर्येण डॉ० हरिगोपालशास्त्रिणा निवेदितम्, यत् सर्वेऽप्यार्यसमाजसभासदः महाविद्यालयस्य सर्वतो भावेन विकासार्थं कृतपरिकराः भवन्तु। अवसरेऽस्मिन् भारतोदयपत्रस्य सहसम्पादकेन श्रीकेशवप्रसादोपाध्यायेनार्यसमाजस्य प्रचार-प्रसारक्षेत्रे महाविद्यालयज्वालापुरस्य योगदानविषये च स्वविचारावलयः प्रकाशिताः। अधुनार्यसमाजसभासदां सैद्धान्तिकशून्यताविषयेऽपि चिन्ता प्रकटिता। विविधमनोरञ्जकभाषण-कविताकलापेन सह दिवसस्यास्य कार्यक्रमः समाप्तः।

❀ महाविद्यालयस्थितपुस्तकालयभवने रायसाहब-चौधरीप्रतापसिंहस्य देहावसानसमाचारमवगत्यैका शोकसभा १-८-८५ दिनाङ्के समायोजिता, यत्र ब्रह्मचारिणां कर्मचारिणामध्यापकानाञ्चोपस्थिति-रासीत्। शोकसभायां श्रीप्रतापसिंहस्य महाविद्या-लयसम्बन्धिसेवायाः चर्चा कर्णगोचरी भूता। यदा यदा ते हरिद्वारं प्राप्ताः, तदा तदा महाविद्यालयार्थं पुस्तकादिमाध्यमेन सदा सहायतावश्यमेवाकुर्वन्। श्रीप्रतापसिंहस्य निधनेन न केवलं महाविद्यालयस्यैवा-पित्वार्यजगतः स्थानमेकं रिक्तम्, यस्य पूर्तिः असम्भव इव प्रतिभाति। सभान्ते सर्वैः मौनमाधाय श्रद्धाञ्जलिः समर्पितः। ★

---

# ★ प्राप्तं स्वराज्यं न तु रामराज्यम् ★

—श्री प्रा० पं० विष्णुदत्तः भारद्वाजः



अन्तं गतं शासनमाङ्ग्लानां
जातोऽधुना नः स्वजनोऽधिकारी।
आख्याति किञ्चिद्विदधाति किञ्चित्
प्राप्तं स्वराज्यं न तु रामराज्यम् ॥१॥

धर्मो नितान्तं समुपेक्षितोऽद्य
गीर्वाणवाण्यै स्वपदं न दत्तम्।
यातं प्रभुत्वं धनिकस्य हस्ते
प्राप्तं स्वराज्यं न तु रामराज्यम् ॥२॥

खाद्यं महार्घं न च पुष्टिदं तत्
शुद्धं न दुग्धं न घृतं सुलभ्यम्।
धनप्रपूर्णाः सकलं लभन्ते
प्राप्तं स्वराज्यं न तु रामराज्यम् ॥३॥

आढ्यो भवत्याढ्यतरः सुखेन
दीनः प्रयत्नो न जहाति दैन्यम्।
दारिद्र्यदीर्णा बहुलीभवन्ति
प्राप्तं स्वराज्यं न तु रामराज्यम् ॥४॥

*हास्य-व्यंग्यधारा*

# एष धर्मः सनातनः

—डॉ० प्रशस्यमित्रः शास्त्री एम०ए० (लब्धस्वर्णपदकः), पी-एच्०डी०
बी० २६, आनन्दनगर (जेल रोड) रायबरेली

**सूत उवाच—**

एकदा नैमिषारण्ये दृष्ट्वा पद्मासने स्थितम् ।
नारदम् ऋषयः सर्वे पप्रच्छुर्मुनिपुङ्गवम् ॥ १ ॥

**ऋषय ऊचुः—**

अधर्म एधते पुण्ये भारते भुवि साम्प्रतम् ।
धर्मश्च क्षीयते नित्यं कथमत्र महामुने ! ॥ २ ॥

बलात्कारोऽपहरणम् अन्याय्यं भ्रष्टतास्तथा ।
शासनेऽस्मिन् प्रवर्धन्ते जना एवं वदन्ति वै ॥ ३ ॥

यदत्र परमं सत्यं वर्त्तते तच्च ब्रूहि नः ।
धर्माऽधर्मस्य सन्दर्भे किमत्र भवतां मतम्? ॥ ४ ॥

**नारद उवाच—**

अज्ञास्ते मां प्रतीयन्ते भारते साम्प्रतं नराः ।
सुशासनमिमं ये वै निन्दन्ति हतबुद्धयः ॥ ५ ॥

किं नाऽपहरणं जातं स्त्रियास्त्रेतायुगे पुरा ।
भीष्मेणाऽपि हृताः कन्या काशिराजस्य द्वापरे॥ ६ ॥

प्राचीनभारतीयायाः संस्कृतेः स्थापनाय वै ।
इहाऽपहरणं युक्तम्, एष धर्मः सनातनः ॥ ७ ॥

वधूनां ज्वालनं चाऽत्र गृहान्निष्कासनं तथा ।
यौतुकार्थं न वै गर्ह्यम्, एष धर्मः सनातनः ॥ ८ ॥

सीता निष्कासिता गेहान्यमन्ये यौतुककारणात् ।
प्रक्षिप्ता चाऽग्निमध्येऽसौ, एष धर्मः सनातनः ॥ ९॥

बलात्कारविरोधोऽपि साम्प्रतं क्रियते वृथा ।
वेदव्यासः सुतः कस्य ?–एष धर्मः सनातनः ॥१०॥

आश्वासनानि दत्त्वाऽपि विस्मृता यदि मन्त्रिणः ।
प्रमाणं तत्र दुष्यन्तः, एष धर्मः सनातनः ॥११॥

वाचं न पालयन्त्येते जित्वा निर्वाचने यदि ।
आश्चर्यं न किमप्यत्र महतां तन्निदर्शनम् ॥१२॥

'शस्त्रं नोत्थापयिष्येऽहम्' इत्युक्त्वा भगवान् स्वयम् ।
अपि भीष्मं च किं चक्रे? एष धर्मः सनातनः॥१३॥

नेतारोऽसत्यवक्तारो भवन्त्येव युगे युगे ।
धर्मराजो यथा द्रोण, एष धर्मः सनातनः ॥१४॥

दलत्यागस्य वृत्तं च नवीनं नैव विद्यते ।
विभीषणो न विस्मार्य, एष धर्मः सनातनः ॥१५॥

चक्षुषां स्फोटनं तद्वद् बिहारे सम्मतं यथा ।
त्रेतायां नासिकाच्छेदः, एष धर्मः सनातनः ॥१६॥

भ्रष्टाचारो न निन्दार्ह आर्यावर्त्ते विशेषतः ।
भ्रष्टाचारं बिना कोऽपि सदाचारं न शिक्षते ॥१७॥

पातालदेशमाश्रित्य रजनीशो यथाऽधुना ।
भोगेषु लभते योगं संभोगे च समाधिताम् ॥१८॥

यथा पङ्के भवेत् पद्मं यथा विषधरे मणिः ।
भ्रष्टाचारे तथैवाऽत्र सदाचारोऽधिगम्यते ॥१९॥

युगे युगे हि धर्मस्य प्रसिद्धा त्वरिता गतिः ।
युगधर्मो न हन्तव्यो धर्मो रक्षति रक्षितः ॥२०॥

इति ते सर्वमाख्यातं गुह्याद् गुह्यतरं मया ।
धर्मस्य सकलं तत्त्वं यश्च धर्मः सनातनः ॥२१॥

**सूत उवाच—**

तस्य तद्वचनं श्रुत्वा धर्मतत्त्वविदो मुनेः ।
मत्वा धर्ममलुप्यन्तमा आर्यावर्त्ते तपोभुवि ॥२२॥

जयघोषम्प्रकुर्वाणाः नारदम्परितः स्थिताः ।
सहर्षं मुनयः सर्वे प्रतस्थुस्ते निजाऽऽश्रमान् ॥२३॥

★

BHARATODAYA Regd. No. SHN|L-13|NP-247/85

# कथा न कथ्या नरदानवानाम्

—श्री नरदेवज्ञा आचार्यः सं० शिक्षकः
श्री राजाराम उच्चविद्यालयः, साठी, पं० चम्पारण्यम्

हेतुं विनाऽन्यार्थविघाताकानाम्,
स्वार्थाय पुञ्जीकृत पातकानाम् ।
मृषैव प्रख्यापितमानवानाम् ।
कथा न कथ्या नरदानवानाम् ॥१॥

अनादरं पूज्यपितुः प्रसोश्च,
प्रकुर्वतां पापपथंगतानाम् ।
श्रुतेः शुभं वर्त्म विमुञ्चताञ्च
कथा न कथ्या नरदानवानाम् ॥२॥

विहाय भार्याः सुतरां सुशीलाः
नितान्तमान्या अतिसुन्दरीश्च ।
वेश्याविलासार्पितवैभवानां
कथा न कथ्या नरदानवानाम् ॥३॥

ज्ञानप्रदान् पूज्यगुरून् महार्हान्,
अहर्निशं निन्दयतां घ्नताञ्च ।
सदा सुहृद्वाक्यविवर्जकानां
कथा न कथ्या नरदानवानाम् ॥४॥

मुधैव सद्धर्मविरोधकानां
स्वार्थेन सन्नीतिनिरोधकानाम् ।
सदा सदाचारपराङ्मुखानां
कथा न कथ्या नरदानवानाम् ॥५॥

सुशान्तिदं सत्यपथं विहाय,
कामेन मिथ्यापथमाश्रितानाम् ।
साधून् जनान् वञ्चयतां स्वबुद्ध्या,
कथा न कथ्या नरराक्षसानाम् ॥६॥

धनान्यनीत्या विविधानि नित्य-
मुपार्जतां दीनजनान् प्रपीड्य ।
विवृद्धलोभाविलमानसानां,
कथा न कथ्या नरराक्षसानाम् ॥७॥

सुवृत्तसन्मार्गमुपेक्ष्य पूतं,
दुर्वृत्तदुर्मार्गमुपागतानाम् ।
दुर्भावदोषैरतिदूषितानां,
कथा न कथ्या नरराक्षसानाम् ॥८॥

शुभान् विचारान् प्रविहाय सर्वान्,
सञ्चिन्वतां दुर्गुणदुर्विचारान् ।
सदा कदाचारसमर्थकानां
कथा न कथ्या नरराक्षसानाम् ॥९॥

सुशीलतां संत्यजतां शुभाढ्यां,
दुःशीलतां संश्रयतां दुरन्ताम् ।
दुष्कर्ममार्गे व्रजतां यथेच्छं,
कथा न कथ्या नरराक्षसानाम् ॥१०॥



'भारतोदयः' (मासिकम्)
पत्रालय-गुरुकुल महाविद्यालयः, हरिद्वारम्-२४६४०४
जनपदः सहारनपुरम् (उ०प्र०)

सेवायाम्
श्री ....................
स्थान ....................
पत्रालयः ....................
जनपदः ....................



"कोहली प्रिंटिंग प्रैस" नामके मुद्रणालये मुद्रयित्वा भारतोदयमासिकं मुखपत्रं
प्राकाश्यतां नीतं ज्वालापुरीय गुरुकुलमहाविद्यालयसभया ।

वर्षम्–७५ अङ्कः–

*

सम्पादकः
**डॉ० हरिगोपालशास्त्री**
एम्० ए०, व्याकरणाचार्यः

*

सह-सम्पादकः
**केशवप्रसाद उपाध्यायः**
एम्० ए०, आयुर्वेदाचार्यः

*

प्रकाशकः
**मन्त्री-सभा**
गुरुकुलमहाविद्यालयो ज्वालापुरम्
(हरिद्वारम्),सहारनपुरम्(उ०प्र०)

*

...ल्क–विवरणम्
— १-५०
...वार्षिकम् — १५-००
...जीवनसदस्यता
२५१-००

...णिका


| | | | |
|---|---|---|---|
| | | –प्रो० हरिश्चन्द्रः | १ |
| २– | | –डॉ० धर्मानन्दशर्मा | २ |
| ३– | मासा... | –डॉ० नारायणमुनिश्चतुर्वेदः | ३ |
| ४– | श्रुतिसुधा | ,, ,, ,, | ४ |
| ५– | अभिज्ञानशाकुन्तले शृङ्गाररसः (शास्त्रीयाध्ययनम्) | –डॉ चन्द्रिकालालः श्रीवास्तवः | ५ |
| ६– | कीदृशो अत्र विजयादशमी | –डॉ०श्रीमती महाश्वेता चतुर्वेदी | १० |
| ७– | श्रीहरिश्चन्द्र-महाकाव्यम् (षष्ठः सर्गः) | –डॉ० बलवीरदत्त शास्त्री | |
| ८– | लघुकथा | –डॉ० सुद्युम्नाचार्यः | १४ |
| ९– | अभिशप्तदशरथम् (एकाङ्कनाटकम्) | –डॉ० रामकिशोर मिश्रः | १५ |
| १०– | कलहं साधयेत् धीमान् | –वैद्यरामस्वरूपशास्त्री | २० |
| ११– | कविता-कलापः (पुष्पम्, हस्तः, दर्दुरः, विहगः, चुम्बनम्) | –श्री हर्षदेवमाधवः | २१ |
| १२– | महाविद्यालय-समाचाराः | ................ | २३ |
| १३– | राजते किट्टवर्तिका | –श्री केशवप्रसाद उपाध्यायः | २३ |
| १४– | हास्यव्यङ्ग्यप्रसङ्गेन | –डॉ० प्रशस्यमित्रशास्त्री | २४ |
| १५– | यस्यास्ति वित्तम् | –डॉ० सत्यव्रतशर्मा 'अजेय' | २४ |


# * सुभाषितम् *

...र्गम्,

...॥

सम्पन्नरूपाः पुरुषाः पृथिव्यां
गुणैर्धनैरप्यथ यौवनेन ।
सत्यं न तावत्सुषमां लभन्ते,
यावन्न वा ते विनयं भजन्ते । ३॥

प्राच्यं नु राज्यं रमणी रमा च,
न याति शोभामखिलं ध्रुवं तत् ।
यावन्न लब्धा विमलाऽखिलानां,
सरस्वती स्वान्तहरा नराणाम् ॥४॥




# तस्मै नमो ब्रह्मणे

श्री प्रो० हरिश्चन्द्रः रेणापुरकरः ( गुलबर्गा )

( १ )

येनाकारि विशालपाररहितं ब्रह्माण्डमत्यद्भुतं
संज्ञाबुद्धिगतिक्रमादिलसितं सोद्देश्यसंकल्पितम् ।
संख्यातीतसुसूक्ष्मगाढनियमैः संदृब्धसंचालितं
तर्कातीतविशालवैभववते तस्मै नमो ब्रह्मणे ॥

( २ )

आदित्यादपि नैकलक्षगुणितस्थूलानसंख्यान् ग्रहान्
नित्यं खे भ्रमतः प्रचण्डरभसा ह्यन्योन्यघर्षं बिना ।
स्वप्रातिस्विकसर्वशक्तिवशतो निर्माय योऽलंबयत्
प्रज्ञातीतमतिक्रियाबलवते तस्मै नमो ब्रह्मणे ॥

( ३ )

नैः संभाव्य नानाविध-
नामान्तरैः स्मर्यते ।
णैः स्वान्ते च यो मृग्यते-
सर्वान्तगतसर्वसाक्षिविभवे तस्मै नमो ब्रह्मणे ॥

( ४ )

वेदाः शुक्रमकायमव्रणमिमं स्तुन्वन्ति यं भूरिशो
मुग्धा भक्तजनास्तु चिक्यतितरां मानुष्यवद्देहिनम् ।
वेदान्तैः खलु नेति नेति बहुशो यो गोयते कुण्ठितै
र्दुर्विज्ञेयदुरूहरूपकृतये तस्मै नमो ब्रह्मणे ॥

( ५ )

निःसंगोऽपि निरीहनिर्मभनिराकांक्षाप्तकामोऽपि सन्
जीवानां कृतकर्मभोगसहितं मोक्षाप्तये केवलम् ।
संसाराभिधकर्मजालवयने लग्नोऽस्ति यः सर्वदा
निष्कामं हि पदार्थमुद्यमभृते तस्मै नमो ब्रह्मणे ॥

( ६ )

आत्मप्रावतनघोरकर्मवशतो दुःखाब्धिमग्नान् जनान्
कामक्रोधमदोग्रनक्रमथितांस्तापत्रयोत्पीड़ितान् ।
भातुं यस्य कृपाकटाक्षकणिकावर्जं न किंचित्क्षमं
स्नेहौदार्यदयाकृपाजलधये तस्मै नमो ब्रह्मणे ॥

( ७ )

यो जन्मान्तजराशरीररहितो यो निर्विकारो विभुः
सर्वव्यापक-सर्वभूतहितकृत् सर्वत्र सर्वेश्वरः ।
सर्वाधारसमस्तशक्तिसहितो यः सच्चिदानन्दभृत्
सर्वज्ञानमयाय मंगलकृते तस्मै नमो ब्रह्मणे ॥

( ८ )

शान्त्यानन्दमहोत्ससागरमहादेवाधिदेवाद् विना
निःसंज्ञाज्जडभौतिकार्यनिचयात्सौख्यं कुतः प्राणिनाम् ।
शान्ता किं तृषितस्य तृण्मृगजलात्क्षुद्वा मृदो भक्षणा
शुद्धानन्दमयाय निर्वृतिजुषे तस्मै नमो ब्रह्मणे ॥

❀